

अक्टूबर 2011

संस्कृत

# चन्दमामा





दीपावली-शुभाशयाः

M.T.V. Acharya

RECAP: RAM AND SHYAM RESCUE AN ALIEN - ZAPTOBAARD, WHEN HIS SPACESHIP CRASHES TO EARTH. IN RETURN HE GIFTS THEM THE DEKATRIX, A POWERFUL GADGET WITH 10 POWERS.

EACH POWER CAN BE UNLOCKED BY EATING THEIR FAVOURITE POPPINS. 10 POWERS: SHAPE SHIFTER- GREEN APPLE, SPEED-MANGO, FLIGHT-ORANGE, GIANT-WATERMELON, STRENGTH-RASPBERRY, SHRINK-LYCHEE, INVISIBLE-PINEAPPLE, STRETCH-MUSK MELON, FISSION-BLACK CURRANT, FORCE FIELD-GUAVA.

PARLE

POPPINS

Doon Kya?

Ram and Shyam

# ज़ूमबोट्स

भाग 2

इस इंटरेक्टिव कहानी के बारे में और जानने के लिए विज़िट करें
http://www.parleproducts.com/brands/parlepoppins
और www.chandamama.com/parle/index.php?pHcid=11

अब तक की कहानी - जापान पर ज़ूमबोट्स नाम के खतरनाक रोबोट्स ने हमला कर दिया था. उन्हें रोकने के लिए, राम और श्याम ज़ूमबोट्स को कंट्रोल करनेवाले मास्टर के दिमाग के अंदर चले जाते हैं.

अब ज़ूमबोट्स के मास्टर को अपनी याददाश्त पर काबू रख पाना बहुत मुश्किल हो जाता है.

राम और श्याम को पता चलता है कि वो मास्टर दरअसल वैज्ञानिक शिनो तोयामा का बेटा है.

पापा, उन बेवकूफों को आपके आविष्कार की कोई कद्र नहीं थी. उन रोबोट्स के हिस्सों को अलग-अलग करके रखने की उन्हें कीमत चुकानी होगी.

मैं अत्सुशु तोयामा, अपने जादू की मदद से इन रोबोट्स में दुबारा जान डालूंगा और पूरी दुनिया को दिखा दूंगा कि जब विज्ञान और काला जादू मिल जाते हैं तो उनका अंजाम क्या होता है.

तोयामा के इशारों पर ज़ूमबोट्स पूरे शहर को तबाह करना शुरू कर देते हैं.

तोयामा के दिमाग से सभी जरूरी जानकारियों को हासिल करने के बाद राम और श्याम उसकी याददाश्त को हमेशा-हमेशा के लिए मिटा देते हैं.

मैं कौन हूं? मैं कहां हूं? और ये मैंने क्या पहन रखा है?

अत्सुशु के तंत्र-मंत्र के बिना ज़ूमबोट्स बहुत ही कमज़ोर पड़ जाते हैं.

वो देखो श्याम, ज़ूमबोट्स अपनी ताकत खो रहे हैं.

चलो, उनका काम तमाम कर देते हैं.

राम और श्याम ब्लैक करंट फ्लेवर वाली पॉपिन्स खाते हैं और खुदको अपने जैसे हज़ारों रूपों में बदल देते हैं.

ज़ूमबोट्स के खात्मे के साथ ही जापान और पूरी दुनिया पर आई मुसीबत खत्म हो जाती है. तोयामा को दिमाग के डॉक्टरों के पास भेज दिया जाता है.

हमें बचाने के लिए राम और श्याम आपका बहुत-बहुत शुक्रिया.

शुक्रिया इस पॉपिन्स का!

POPPINS

यदि भवताम् परिचये कुटुम्बे परिसरे कोऽपि बाल्ये एव प्राप्तयशाः बालः अस्ति चेत् कृपया तस्य/तस्याः विवरणं स्वसन्दर्भं दत्त्वा अस्मान् प्रति प्रेष्यताम्।

Young Achievers-RCM,
Chandamama India Ltd,
No:2 Swati Enclave,
Door No 5 & 6,
Amman koil street,
vadapalani,
chennai-26
(or)
online@chandamama.com



## लक्ष्यम्

विश्वकर्मकुलोद्भवा श्रुतिः काचन १२ वर्षीया उत्साहसम्पन्ना बालिका। अनया बालया अल्पीयसि वयसि एव महद्यशः आसादितम्। धनुर्विद्यायां निपुणा एषा धन्विनी नातिचिरात्प्राक् राञ्च्यां सञ्जातासु चतुस्त्रिंशत्तमासु राष्ट्रीयस्पर्धासु अत्युच्चविक्रमं संस्थापितवती।

तस्याः पिता राञ्चीनगरस्थस्य कस्यस्विद् लघोः यानपरिष्करणकेन्द्रस्य स्वामी, तथापि सः श्रुत्याः तस्या अनुजायाः कृते च सर्वाः अपि सुविधाः अकल्पयत् तयोः प्रोत्साहनं चाकरोत्। पुणेनगरे जातायां ५६तमायां शालास्तरीयायां राष्ट्रीयस्पर्धायां सा कांस्यपदकं समपादयत् १४ वर्षेभ्यः न्यूनवयसः क्रीडापटूनां गणे च प्रथमस्थानम् आर्जयत्। २०१०तमे वर्षे विजयवाडानगरे सञ्जातायाः लघुराष्ट्रीयधनुःस्पर्धायां तया सुवर्णपदकम् अपि अर्जितम्।

राञ्चीनगरस्य लोहारडागाविभागस्थायां 'ग्रेटर् त्रिवेणी पब्लिक् स्कूल्' इत्येतस्यां पाठशालायां सप्तम्यां कक्ष्यायां पठति श्रुतिः। तस्याः अध्यापकाः अपि तस्याः विक्रान्तचरितेन गर्वम् अनुभवन्ति।

झारखण्डराज्ये अन्येषामपि क्रीडापटूनाम् आदर्शभूता वर्तते श्रुतिः। तेषां कृते उत्तमं प्रशिक्षणं सुविधाश्च कल्प्यन्ते चेत् ते राष्ट्रीयस्तरे क्रीडास्पर्धासु इतोऽपि अधिकं कौशलप्रदर्शनं कर्तुं समर्थाः भवन्तः जागतिकस्तरेऽपि भारतस्य प्रतिनिधिरूपेण सुवर्णपदकानि प्राप्तुम् अर्हन्ति।



अक्टूबर २०११ ` 20/-
*Founded by* B. Nagi Reddi and Chakrapani

Editor & Publisher :
Prashant Sharad Mulekar
Associate Editors :
R. Vaasugi, K. Raja Sekhara Raju
Sub Editor :
Patricia Pandian
Content Head - Online :
Sowmya Bharadwaj
Senior Artists:
K.C. Sivasankaran (Sankar), Gandhi Ayya, P. Mahesh, Sandeep Solkar
Artist :
Venki
Layout Designers :
B. Thirumal, K. Narendra, J. Sivakumar
Production In-charge :
Prashant Pawar
Circulation:
circulation@chandamama.com
Asst. Manager - Sales & Circulation:
Subhankar Rej
Sales Officer - Circulation :
K. Ravishankar
Advertisement :
sales@chandamama.com
Subscription :
subscription@chandamama.com
Ramya K (Chennai)
Ph: +91 44 4399 2828
Head Office :
CHANDAMAMA INDIA LTD.,
P.O.Box No:19407, Mumbai-400093
Phone +91 22 28312872 / 28311849
Email:chandamama@chandamama.com
Website : www.chandamama.com

Published, Printed and Owned by CHANDAMAMA INDIA LTD., Published and Printed on their behalf by Prashant Sharad Muleker Published at B-3, Cross Road 'B', MIDC, Andheri (East) Mumbai - 400093. Printed At :- Kala Jyothi Process Pvt. Ltd, S.No.185, Kondapur, R.R.District-500133, Andhra Pradesh. Editor :- Prashant Sharad Mulekar

S

# अन्तरङ्गम्

## चन्दमामा

Volume-2 October 2011 Issue-10

# इतिहासस्य साक्षिण: ... द्वितीय: गान्धी...

लेखनोत्पीठिकायाम् उपविश्य ऑक्टोबरमासस्य पत्रिकाया: कृते सम्पादकीयं लेखितुम् इच्छन् अहं 'मम पत्रिकाया: पाठकान् गान्धीवादस्य मूलतत्त्वं चर्वितचर्वणं विना कया सरण्या ज्ञापयितुं शक्नोमि' इति चिन्तायां रत: आसम्। तावदेव मम अपरोक्षमेव घटमानम् इतिहासमपश्यम्।

अस्मासु बहव: गान्धीकालोत्तरं जाता:। अत: गान्धीमहोदयेन प्रतिपादितस्य तत्त्वज्ञानस्य स्वातन्त्र्यसमरकाले सर्वत्र दृश्यमानं परिणामं वयं नान्वभवाम। परं गतेभ्य: कतिपयमासेभ्य: वयं तत् साक्षात् अनुभवाम:। कश्चन ज्येष्ठ: 'युवा' सामान्येतरदृष्ट्या जगत् पश्यन् इतिहासम् अरचयत्। आत्मनि स्वध्येय्ये च श्रद्धा वर्तते चेत् अशक्यमपि कार्यं साधयितुं शक्यते इति स: अस्मान् ज्ञापितवान्। अधुना आत्मपरीक्षणं विधाय ध्येय्यसिद्ध्यर्थम् अखण्डितप्रयत्नानां कालोऽयं समुपस्थित:।

अस्मिन् मासे वयं विजयादशमीपर्व दीपोत्सवं च आचराम:। असत: पराभवं सत: विजयं च द्योतयत: एते। प्रभु: रामचन्द्र: अस्मिन्नेव दिवसे रावणं नाशयित्वा अयोध्यां प्रत्यागत:। दुर्गादेव्या: महिषासुर: विजित: पाण्डवैश्च विजयादशम्यामेव अज्ञातवास: त्यक्त:। दीपावल्या: दिवसे भगवता श्रीकृष्णेन नरकासुर: निहत: अर्हता भगवन्महावीरेण च निर्वाणं प्राप्तम्। यदा वयं एता: घटना: पर्वरूपेण स्मराम: आचरामश्च तदा अस्माभि: अस्मासु विद्यमाना: दुर्गुणा: अभिज्ञातव्या: तेषां नाशनार्थं यत्नोऽपि कर्तव्य:। दशभाषासु आय्-फोन्, आय्-पोड् माध्यमेन च कृतं चन्दमामाया: प्रकाशनं पाठकेभ्य: नितराम् अरोचत। एतेन वयं अस्या: पत्रिकाया: आधुनिकप्रसारतन्त्रस्य साहाय्येन प्रकाशनं कर्तुम् उत्साहं प्राप्तवन्त:। मोबाइल्माध्यमेन अस्माभि: कृतं लघुकथानां प्रकाशनमपि अस्माकं पाठकानां स्तुतिभाजनम् अभवत्। तेनापि वयं भृशम् उत्सहामहे। आगामिमासेषु इतोऽपि अधिकं साहित्यम् आन्तरजालद्वारा मोबाइल्माध्यमेन च बहून् पाठकान् प्रति प्रापयितुं प्रयत्नरता: वयम्। भवतां सर्वेषां प्रोत्साहनेन यश:पथि पदमनुपदम् आदधामो वयम्। अस्माकं सर्वोऽपि गण: भवतां प्रोत्साहनेन भूरि भूरि उपकृतोऽस्ति।

*- संपादक:*



# वाचकानां पुटोऽयम्

**आ** बहुभ्य: वर्षेभ्य: अहं चन्दमामापत्रिकां पठामि। अस्यां वर्तमानानि नानावर्णयुतानि चित्राणि, रञ्जका: कथाश्च एनां पत्रिकाम् अतुलनीयां कुर्वन्ति। उचितशब्दाभावात् तेषां चित्राणाम् अद्भुतम् आकर्षणसामर्थ्यं व्यञ्जयितुं न शक्नोम्यहम्। यथा पौराणिककथा: मम प्रिया: तथा आधुनिककथा: अपि मह्यं रोचन्ते। यथार्थतया संस्कृतिरक्षणार्थं चन्दमामाप्रकाशकगणाय साधुवादान् व्याहरामि अहम्। एषा पत्रिका निरन्तरतया प्रकाशिता भूयात् अधिकाधिकपाठकाश्च तां पठ्यासु: इति ममेच्छा।

*- हरिहरन्, करमवेली, पतनमतिट्ट, केरलम्*

**ग**तदशवर्षेभ्य: वयं चन्दमामापत्रिकां पठाम:। कृपया चन्दमामायां किमपि परिवर्तनं मा क्रियताम्। सा यथावत्तिष्ठतु। २५-५० वर्षेभ्य: पूर्वं प्रकाशिता: कथा: पुन: प्रकाश्यन्ताम्। 'त्रय: ऐन्द्रजालिका:' इति धारावहिकामपि पुन: प्रकाशयतु। तथैव महाकाव्यधारावाहिकानामपि पुन: प्रकाशनम् भवतु। नूतनं साहित्यं नेच्छाम: वयम्। तत्सर्वमपि मम कृत्रिमं भाति। नेरेमने सरसम्मा, अत्तरु साहेबा इत्यादिकं बहु रोचकमासीत्। तेषां चटकक्कथया तुलना क्रियते चेत् द्वयो: भेद: विना कष्टं ज्ञायते। वयं तु पुरातनचन्दमामामेव वाञ्छाम:।

*- पुरुषोत्तम: लोनी, पवित्रा, बीजापुरम्*

**ऑ**गस्टमासस्य सञ्चिकायां प्रकाशिता वेतालकथा नितरां शोभना। सम्प्रति: प्रकर्षेण चर्च्यमानां कृषकाणां समस्याम् एषा कथा प्रकाशम् आनयति। कृषीवलस्य कृषिकर्मणि वर्तमानां रतिं न कोऽपि नाशयेत्। एषा कथा सद्य: कालीनां कृषिसमस्यां सुचारुतया अभिव्यञ्जयति। लघुकथा: अपि रुचिरा: आसन्। चन्दमामाया: स्मरणमपि आनन्दं जनयति। *- प्रत्यूषा, रगलीना, तितुपति, आन्ध्रप्रदेश:*

**१९५७** तमात् वर्षात् आरभ्य चन्दमामाया: पाठकोऽहम्। तदानीं तस्या: मूल्यं केवलं ३७ पैसामितमासीत्। भवन्त: पुरातनधारावाहिकाणि पुन: प्रकाशयन्ति साधु तत्। परं रूपधारणा यन्त्रेगलु इत्येतत् धारावाहिकं न पुन: कदापि प्रकाशितम्। शिथिलालयधारावाहिकानन्तरं तस्य धारावाहिकस्य विना विलम्बं प्रकाशनं भवतु इति मम प्रार्थना।

*- एस्. जनार्दन:, बङ्गलुरु*

**चन्द**मामास्था: लघुकथा: धारावाहिकाणि च सत्यमेव उत्तमानि। महत्या उत्कण्ठया वयं चन्दमामां प्रतीक्षामहे। समयेन पत्रिकां प्राप्य मोदामहे। पत्रिकाप्रेषणे पुनरपि विलम्ब: मास्तु। *- पी. शिवशङ्कर:, हैदराबाद्*

**यदा** अहं चन्दमामां प्रति पत्रं लिखामि तदा स्वकीयं सुहृदं प्रति पत्रं लिखामि इति भाव: मनसि उत्पद्यते। वर्तमानचन्दमामाया: कस्यापि भागस्य निष्कासनं मास्तु। सुडोकुप्रहेलिकाया: प्रकाशनमपि अनुवर्तताम्। तेन बालानां चिन्तनसामर्थ्यं वर्धते। सामान्यज्ञानपरीक्षा अपि उपकारिणी। पाठका: नि:सन्देहं भवतां नूतनसाधुप्रयोगान् अनुमोदेरन्। छायाचित्रस्पर्धाया: अनुवर्तनविषये क: निर्णय: भवताम्?

*- पी. रविन्द्रराव:, हैदराबाद्*

# येन यथा कथितम्

काशीनगरे एकस्य वणिजः चत्वारः पुत्राः आसन्। एकस्मिन् दिने मृगयायाः प्रत्यागच्छन् एकः व्याधः एकेन यानेन मृगयाम् वहन् तैः चतुर्भिः पुत्रैः दृष्टः।

"भोः किञ्चित् मांसम् देहि।" इति ज्येष्ठः पुत्रः रौद्रस्वरेण पृष्टवान्। व्याधेन तस्य मृतस्य पशोः किञ्चित् मांसम् छित्त्वा तस्मै दत्तम्।

द्वितीयोऽपि पुत्रः पृष्टवान्, "किम् मह्यम् अपि किञ्चित् मांसम् दीयते वा?" श्रुते सति व्याधेन तस्य पशोः उरभागात् किञ्चित् मांसम् छित्त्वा तस्मै दत्तम्।

तृतीयोऽपि पुत्रः अवदत्, " रे बन्धो! मह्यमपि किञ्चित् मांसं देहि।" झटिति व्याधः पशोः हृदयं विदीर्य तस्मै अददात्।

चतुर्थेण व्याधः सविनयम् उक्तः, रे मित्र! कृपया किञ्चित् मह्यमपि देहि।" तत् श्रुत्वा सपदि व्याधः अपृच्छत्, "भोः मित्र, तव गृहम् कुत्र इति वद , अहं मांसेन पूरितम् एतं शकटं तव गृहपर्यन्तम् नयामि। एतत् सर्वं तवैव किल!

अस्मासु चतुर्षु त्वया इदृशः भेदः किमर्थ कृतः? इति ज्येष्ठेन पुत्रेण पृष्टे सति व्याधः अवदत्, "यस्मै यावत् वा दातव्यम् आसीत् तावत् मया दत्तम्। भेदभावना मयि नास्ति, भेदः तु युष्माकं वचस्सु एव।

व्याधस्य वचांसि श्रुत्वा सन्तुष्टैः तैः पुत्रैः सः सेवकरूपेण नियुक्तः।



# मत्स्मृतय: - १

यदि चन्दमामा न पठ्यते तर्हि किं भवेत्? कोकिलगानश्रवणेन मयूरनृत्यदर्शनेन यथा जीवनं नीरसं भवति तथा नीतिकथानामपठनेनापि जीवनं नीरसं भवति। सर्वेषां मानवानां दैवे विश्वास:, पापभीति: सामाजिकनैतिक-नियमानां पालने आसक्तिश्च भवेत् इति नीतिकथा: अस्मान् बोधयन्ति। रामायणमहाभारतादय: धर्ममार्गं निर्दिशन्त: अधर्माचरणेन अपकीर्ति: भवतीति सोदाहरणम् उद्बोधयन्ति। पञ्चतन्त्रकथासु मृगाणां, पक्षिणां च भाषणेन सर्वेऽपि विस्मिता: भवन्ति। तत्र तेषां सम्भाषणमाध्यमेन वयं किम् अधिगच्छाम: इति प्रधानं भवति।

माता यथा स्वपुत्रं भोजयन्ती उत्तमानि मूल्यानि शिक्षयति तद्वदेव चन्दमामा युवकान् नैतिकमूल्यानि बोधयति। आकाशस्थस्य चन्द्रस्यापि कलङ्क: दृश्यते किन्तु चन्दमामापत्रिकां वयम् आक्षेप्तुमपि न शक्नुम:। अत एव चन्दमामां बाला इव ज्येष्ठा अपि पिपठिषन्ति। चन्दमामा लोकेभ्य: न्यूनमूल्येनैव अधिकं ज्ञानं प्रददाति कश्चित् चन्दमामां भृशं प्रशंसति चेदपि न अतिशयोक्तये भवति।

यथा अत्रत्या: कथा आसक्तिकारका: भवन्ति ततोऽप्यधिकं तत्रत्यानि चित्राणि आसक्तिं जनयन्ति। तानि नेत्रै: सह हृदयमप्यनुरञ्जयन्ति। चन्दमामादर्शनात् परं य: कोऽपि तत्क्रयणात् मन: निग्रहीतुं न शक्नोति। तथा तत्पठनादपि निग्रहीतुं न शक्नोति।

"एकदा शिलङ्गेरी इति ग्रामे" इति आरभ्यमानां कथां मम पुत्र: पुत्री च बाल्ये असकृत् पठत: स्म। अधुना मम पुत्री ३७ वयस्का। पुत्रस्तु ३५ वर्षीय:। तौ द्वावपि सङ्गणकतन्त्रज्ञौ। अधुनाऽपि तौ चन्दमामां पठत: एव। शिकागो नगरात् इदमिदानीं मम पुत्र: यदा आगत: तदा वयं शिलङ्गेरीकथालेखकस्य 'श्रीकोलार्' महोदयस्य विषये चर्चितवन्त:।

ममैतानि वचनानि न केवलं प्रशंसायै, किन्तु तासां कथानां अमृतोपमानानां माधुर्यास्वाद: मयानुभूत:। चन्दमामा मानवीयमूल्यानि, धर्मान्, नीतिं च संस्मारयन्ती बालानपि उद्बोधयति।

१९४७ वर्षत: अद्ययावत् पत्रिकामेनां सुचारुतया सञ्चालितेभ्य:, सम्पादकेभ्य: अन्यकर्मकरेभ्यश्च अहं सादरं प्रणामान् वितरामि। इयं चन्दमामापत्रिका आचन्द्रतारकं राजतामित्यशास्य स्मृतिपथ: विरमामि।

*- ए. श्रीनिवास राव:,व्याख्याता- व्हाईट फिल्ड, बंगलुरु*

# मत्स्मृतय: - २

भवताम् अनेन मासिकेन अयं वृद्ध: आङ्ग्लपुरुष: हिन्दीभाषां पठितुम् अतीव साहाय्यं लब्धवान्। इयं भाषा पठितुं मत्कृते न सहजसाध्या आसीत् परन्तु मम 'पूज्य: गुरुदेव:' मह्यम् एकां 'चन्दमामा' सञ्चिकां दत्तवान्। तस्य उपहारेण मम अध्ययनमतीव सुकरं जातम्। चन्दमामासदृश्य: कथा: मया कुत्रापि न पठिता:।

मां विहाय ऑस्टेलियादेशे न कोऽपि 'विक्रम-वेताल' कथा: जानीयु:। चन्दमामात: एव इदृश्य: कथा: ज्ञाता:। चन्दमामा कारणात् अधुना हिन्दीभाषां सम्यक् अवगन्तुं समर्थ: अहम्। ४५ वर्षेषु यावद् न पठितं तावत् गतेषु त्रिषु वर्षेषु आत्मसात्कृतम्। गुरुद्वयम् चन्दमामा च एते एव तत्र कारणम्। नवजीवनस्य द्वाराणि एव मत्कृते उद्घाटितानि तै:।

अत: सर्वेभ्य: चन्दमामावाचकेभ्य: निवेदयितुम् इच्छामि यदि मादृश: वयोज्येष्ठ: पठनम् असाध्नोत् तर्हि युष्मादृशाणां कनीयसां कृते अपि तद् न अशक्यप्रायम्। तथा च स्मरन्तु यद् 'हिन्दी' अतीव उत्तमा भाषा।

पत्रसमापनात् पूर्वं मम गुरुद्वयस्य विषये कथयितुम् इच्छामि। सुमना: काचित् गुर्जरी महिला, दीपल ठक्कर इत्याख्या माम् अक्षराणि सम्यगुच्चारणं च पाठितवती। अधुनापि सिडनीत: दूरवाणीद्वारा सा मया भाषणाभ्यासं कारयति। धन्यवाद: भगिनि।

एषु दिनेषु 'विद्यासागर पत्तन:' प्रमुख: शिक्षक:। य: मह्यं भाषापरिष्कारार्थं प्रथमतया चन्दमामां दत्तवान्। तस्मै मम शुभाशया:।

चन्दमामापत्रिकया भृशम् अनुगृहीत: अस्मि। इतोऽपि शतसंवत्सराणि अस्मिन् अनवद्ये कार्ये रता भव इति प्रार्थयामि।

*- ऍण्ड्र्यु हेवात्, मेलबोर्न, सिडनी, ऑस्ट्रेलिया ३०७१*

**Request to readers:** Contributors of stories, memories are requested to send in their entries with their complete name, address, phone no and other contact details to enable us to get back to you.

Write to us:

**Chandamama India Ltd.,** No:2 Ground Floor, Swathi Enclave, Amman koil street, Vadapalani, Chennai-600026.

● Phone: 044-43992828 ● Email : online@chandamama.com

## विक्रमः वेतालः च

# मरकतकण्ठहारः

दृढनिश्चयी राजा विक्रमः वृक्षं प्रत्यागच्छत्। तेन वृक्षात् प्रेतः अधः आनीतः स्कन्धे च धृतः। यथानित्यं सः मौनेन श्मशानं प्रति गमनमारब्धवान्। ततः प्रेते निवसन् पिशाचोऽवदत्, ''भोः राजन्, अहं चिन्तयामि यत् तव कष्टार्थं त्वं दैवीशक्तियुक्तं किमपि पारितोषिकं प्राप्नुयाः इति वाञ्छसि किम्? अद्भुतवस्तूनां प्राभावः अपि अद्भुतः एव।तादृशानि वस्तूनि तेषां स्वामी इव अकल्पितमार्गेण कार्यं कुर्वन्ति। कदाचित् न्यायिनः जनाः अपि तस्य वस्तुनः प्रभावात् तेषां न्यायदानमतिं नाशयन्ति। अहं राज्ञः शिवचन्द्रस्य कथां तुभ्यं कथयामि यः तादृशं वस्तु आत्मीयाय सुहृदे अयच्छत् यत् तं सङ्कटे आपातितवत्। आश्चर्यं नाम तद् वस्तु मित्रे अपि अकल्पितप्रभावम् अजनयत्। शृणु तां कथां येन तव श्रमपरिहारोऽपि भवेत्।

पुरा कालिन्दी-राज्ये चन्द्रः नाम अजपालः



निबसति स्म। प्रतिदिनं सः अजयूथं तृणाच्छादिते पर्वते चरितुं नयति स्म। एकदा सः अजयूथेन सह गृहं प्रत्यागच्छन् आसीत्। मार्गे एकः लघुः अजः यूथात् विभक्तः जातः शुष्के पुरातने कूपे च पतितः। चन्द्रः तस्य अजस्य आक्रोशमशृणोत्। ध्वन्यनुगामी सः तमजं कूपे पतितमपश्यत्। चन्द्रः अजं कूपात् बहिः निष्कासितवान्। यावत् अजं निष्कास्य सः प्रत्यागच्छन् आसीत् तदा एव एकः मरकतकण्ठहारः तत्र पङ्के पतितः तेन दृष्टः। सः हारः पङ्केन लिप्तः। पङ्कलिप्त:सः हारः वस्तुतः सुवर्णस्य उत सामान्य:इति सः सम्यक् परीक्ष्य न ज्ञातवान्। तदा रात्रिसमयः आसीत्। अन्धकारे सः हारस्य परिक्षणं कर्तुं न शक्तः। श्वः कस्मैचित् सुवर्णकाराय एव दर्शयामि एनं हारं, तस्य मूल्यं च अवगच्छामि इति विचिन्त्य सः तं हारं कोषे स्थापितवान्। अजयूथेन सह गृहं प्राप्तवान्।

अन्येद्युः सः तं हारं सुवर्णकारस्य समीपे नीतवान्। सुवर्णकारः तं हारं दृष्ट्वाऽवदत्, ''चन्द्र, तव तु भाग्योदयः जातः। एतस्य हारस्य मूल्यं न्यूनातिन्यूनं पञ्चविंशतिः सहस्रं बराहाः इति स्यादेव।''

चन्द्रः तं हारं गृहे सुरक्षितस्थानेऽस्थापयत् प्रतीक्षां च अकरोत् यत् सः कस्मैचित् तं हारं विक्रेतुं शक्नुयात्। परन्तु अकस्मात् तस्य गृहे विपरीतघटनानां शृङ्खला एव आरब्धा। सप्ताहाभ्यन्तरे एव तस्य अजाः क्रमेण अम्रियन्त। तस्य स्वस्था पत्नी अकस्मात् रुग्णा जाता। कुतो एवं जायते इति यदा सः व्यचिन्तयत् तदा तस्य एवमभासत यत् 'एषः अस्य हारस्य एव दुष्टः परिणामः। अनिष्टप्रभावशाली अयं हारः न क्षणमपि गृहे स्थापयितव्यः इति तेन निश्चयः कृतः। अतः कथं वा तस्मात् मुक्तो भवेयम्' इति तस्य चिन्ता।

चन्द्रः रत्नहारं प्राप्तवान् अस्तीति वार्ता ग्रामे सर्वत्र प्रसृता। चेञ्चुः नाम कश्चन चोरोऽपि तस्मिन् विषये ज्ञातवान्। एकस्यां रात्रौ सः तूष्णीं तस्य गृहं प्रविष्टः। चन्द्रः, यस्य श्रवणेन्द्रियं सर्पः इव सूक्ष्मरवानुग्राही आसीत्

सः, गृहे चोरः प्रविष्टः अस्ति इति ज्ञातवान्। सः मनस्यकरोत् यत् चोरः तं रत्नहारं चोरयितुमेव आगतः अस्ति। सः अतीव प्रमुदितः यत् 'अहम् अस्मात् दुष्टवस्तुनः मुक्तो भवेयम्'। अतः सोऽचलोऽतिष्ठत्। चोरस्य चौर्यकार्यं निर्विघ्नतया प्राचलत। अचिरादेव चेश्रुः हारं लब्धवान्।

रत्नहारं प्राप्य चेश्रुः अतीव प्रमुदितः। सः त्वरया एकं जीर्णं पुरातनमाश्रयस्थानं गतः यत्र सः तथा च तस्य सहकारिणः चौराः आत्मानं गोपयन्ति स्म। सः हारः अनुक्षणं तस्य प्रभावं प्राकटयत्। तस्य सहकारिणः तेन सह हारार्थम् अयुध्यन्। एकः क्रुद्धः चोरः तं क्षुरिकया अभाययत्। चेश्रुः गम्भीरतया व्रणितः जातः। तत्समये एव एकः आरक्षकाधिकारी ततः गच्छन् तेषां कलहरवमशृणोत्। आरक्षकाधिकारी खड्गं धृत्वा तान् प्रति प्राधावत्। अन्ये चोराः सतर्काः आसन् अतः ते पलायिताः। परं व्रणितः चेश्रुः विनाकष्टं गृहीतः।

चेश्रुः पूर्वं कदापि आरक्षकैः न गृहीतः न वा तस्य सहकारिभिः सह अयुध्यत्। तथा च न कदापि तावान् गम्भीरतया विद्धः जातः। अतः तस्य मनसि शङ्का उत्पन्ना यत् कथमेतत् जातम् अद्य? तदा तेन निर्णीतं यत् 'एषः दुष्प्रभावः तस्य हारस्यैव'।

आरक्षकाधिकारी चेश्रुं कारावासे क्षिप्तवान् तं हारं स्वपत्न्यै उपहारीकृतवान् च। सप्ताहाभ्यन्तरे सः आरक्षकाधिकारी सर्पेण





दष्टः। यस्मिन् समये सः आरक्षकाधिकारी वैद्यस्य उपचारैः स्वस्थः जातः तस्मिन् समये एव तस्य पुत्रः ग्रामोत्सवे कुत्रचित् नष्टः। बहुभिः प्रयत्नैरपि सः न लब्धः। 'अस्य हारस्यैव कारणेन वयमस्याम् आपत्तौ पतिताः स्मः' इति उक्त्वा तस्य पत्नी तं रत्नहारं क्षिप्तवती। आरक्षकाधिकारी व्यचिन्तयत् यत् तस्याः विचारः योग्यः एव। किञ्चित्कालं चिन्तयित्वा सः तं हारं स्थानिक-भूधारकं तस्य कृपापात्रं भवितुम् उपहारीकृतवान्। हारस्य प्रभावात् मुक्तः आरक्षकः नष्टं पुत्रं पुनः लब्धवान्।

यथा सः हारः भूधारकस्य गृहं प्राप्तः तस्य एकः उत्तमर्णः दिवङ्गतः। सः तस्मै प्रभूतं धनं ऋणरूपेण दत्तवान् आसीत्। 'इदानीम् एतद् धनं पुनः न लभेय' इति विचिन्त्य भूधारकः व्यथितः। अस्यां व्यथायामेव तस्य पुत्री अकस्मात् रुग्णा जाता। भूधारकेण मनसि चिन्तितम् एते सर्वे हारस्य दुष्प्रभावाः एव।

सः एतस्मात् मुक्तो भवितुम् इच्छति स्म। सोऽचिन्तयत् प्रायः एषः हारः ममैव लाभाय न स्यात्। अन्येषां कृते प्रायः लाभकरः स्यात्। अतः सः राज्ञ्याः जन्मदिने राज्ञे शिवचन्द्राय तम् उपहारीकृतवान्।

हारस्य निर्मितिकौशलेन प्रभाविता राज्ञी तं कण्ठे धृतवती।

पक्षाभ्यन्तरे एव राज्ञा शिवचन्द्रेण गुप्तचरेभ्यः ज्ञातं यत् तस्य सामन्तवासी राजा जयवर्धनः तस्य साम्राज्ये आक्रमणं कर्तुमिच्छति। जयवर्धनः सैन्यस्य सज्जतां कुर्वन् आसीत् यदा शिवचन्द्रस्य सैन्याधिकारी विक्रमकान्तः महाज्वरेण पीडितः आसीत्। एतद् अशुभलक्षणं मत्वा शिवचन्द्रः ज्यौतिषिकम् आहूतवान्। ज्योतिषिकाः ग्रहतारकाणां स्थितिं गणयित्वा अपृच्छन् "देव, सद्यः एव भवतः गृहे किमपि आभूषणं, कश्चन जनः, कश्चन पशुः प्रविष्टः अस्ति किम्?" क्षणं विचिन्त्य राजा हारविषये उक्तवान्।

ज्योतिषिकः उपादिशत्, "राजन्, एषः दुष्प्रभावः हारस्य एव। यावच्छीघ्रं भवान् अस्मात् मुक्तः भविष्यति तावत् उत्तमम्" इति।

राजा शिवचन्द्रः एषः हारः कुत्र केन वा प्राप्तः अस्य मार्गान्वेषणे मग्नः जातः।

सः एतदपि ज्ञातवान् यत् यः कोऽपि एनं हारं लब्धवान् सः कथम् आपद्ग्रस्तः जातः। तथैव हारात् दूरं गताः जनाः तस्य हारस्य प्रभावात् कथं मुक्ताः च जाताः।

राजा शिवचन्द्रः अस्मिन् सन्दर्भे बहुकालं यावत् चिन्तितवान्। तदनन्तरं सः तं हारं स्वस्य मित्राय सागरभूषिताय दातुं निश्चितवान्। राज्ञी तस्य निर्णयं पृच्छन्ती उक्तवती, "महाराज,किं भवान् अस्य हरस्य दुष्प्रभावं न जानाति? यः यः अस्य सम्पर्कम् आगतः सः सः आपदि पतितः। अस्माभिः स्वयमपि तस्य दुष्प्रभावः अनुभूतोऽस्ति। भवतः मित्रं सागरभूषितः पूर्वं श्रेष्ठः समुद्रवणिक् आसीत्। तस्य नौकाः सागरे मज्जिताः अतः महती हानिः तेन सोढव्या अभवत्। एवं तस्मिन् महान् ऋणभारः आपतितः, तस्यारोग्यमपि नष्टम्। तर्हि किमेतत् युक्तं वा यदस्माकं सङ्कटं दूरीकर्तुं वयं तस्मै हारम् उपायनीकृत्य महति सङ्कटे क्षिपामः। भवान् प्रजारक्षकः इति ख्यातिं गतोऽस्ति। महान्ति व्यसनानि सम्मुखीकुर्वन् भवान् न्याय्यात् पथः कदापि न विचलितः। अतः कृमया अधुनापि योग्यमेव आचरतु। मित्रस्य नाशस्य कारणं मा भवतु भवान्" इति।

स्थिरचित्तः राजा राज्ञ्याः वचनं श्रुतवान्।



सः केवलं स्मितहास्यं कृतवान्। अन्यस्मिन् दिने सः मित्रं सागरभूषितमाहूय तस्मै कण्ठहारं दत्तवान्। केषुचित् दिनेष्वेव कालिन्दीराज्यस्य सेनापतिः आरोग्यं प्राप्य शत्रोः आक्रमणं रोद्धुम् सज्जोऽभवत्। केनचित् कारणेन राजा जयवर्धनः आक्रमणस्य योजनां निरस्तमकरोत्।

तावदेव न। आश्चर्यं नाम, सागरभूषितस्य गृहे न कोऽपि उत्पातः जातः। प्रत्युत शुभघटनाः एव प्रवृत्ताः। सः पुनरपि स्वस्थः, तस्य लघुव्यवसायः च विस्तृतः जातः। संवत्सराभ्यन्तरे एव तस्य व्यवसायः पूर्णतया विकसितः, सः पूर्वतनं स्थानमपि प्राप्तवान्।"

वेतालः एतावतीं कथामुक्त्वा राजानं विक्रममपृच्छत्, "भोः राजन्, यः यः हारं

प्राप्तवान् सः सः सङ्कटे पतितः, अनारोग्यं प्राप्तवान्, तस्य धनं नष्टं। एतद् सर्वं ज्ञात्वा अपि राज्ञा स्वमित्राय तेन कण्ठहारः दत्तः। किमेतद् युक्तम्? कथं वा न्यायिनः राज्ञः एवम् अधःपतनम् अभवत्? एतदपि आश्चर्यमेव यत् सर्वेषु दुष्प्रभावं जनयन् एषः हारः सागरभूषितस्य सौभाग्याय अभवत्। किं भवान् एवं चिन्तयति यत् अस्य दुष्प्रभावं अन्येभ्यः श्रुत्वा तत् दूरीकर्तुं तेन किमपि धार्मिकं कृत्यम् आचरितम्? अथवा तेन तादृशं किमपि लब्धं येन तस्य दुष्परिणामाः अपगताः। यदि अस्य प्रश्नस्य उत्तरं ज्ञात्वापि त्वं न वदेः तर्हि तव मस्तकं सहस्रशकलेषु विभक्तं भवेत्।''

''वेताल, स्वस्वामिनः परिस्थिति-परिवर्तने कण्ठहारस्य प्रभावः आसीत्। ये आरोग्यपूर्णाः आसन् ते अनारोग्यम् अन्वभवन्। ये धनिकाः आसन् तेषां धनं सुविधाः च नष्टाः। राज्ञः मित्रं सागरभूषितः तादृश्यां दुरवस्थायामासीत् यत्र तस्यारोग्यं धनं च नष्टं जातमासीत्। सः आपत्तौ मज्जितः आसीत्। राज्ञा सूक्ष्मावलोकनेन एतद् ज्ञातं यत् यत्र सुव्यवस्था अस्ति तत्र कण्ठहारः दुरवस्थां करोति तथैव विपरीतक्रमेण दुरवस्थायाः सुव्यवस्थामपि कुर्यात्। तस्य तर्कानुसारं सागरभूषितः व्यसनेभ्यः तीर्णः जातः। सः धनारोग्ये प्राप्तवान्। अतः राज्ञः सागरभूषितस्य मैत्रीविषये न कोऽपि सन्देहः। राजा न किमपि अयुक्तमाचरितवान्। सागरभूषितः हारविषये यत्किञ्चिदपि न जानाति स्म। अतः तस्य दुष्परिणामान् दूरीकर्तुं अथवा तस्मात् मुक्तो भवितुं सागरभूषितेन किमपि धार्मिककार्यम् आचरणीयम् इति प्रश्नः एव न उद्भवति।''

यावत् विक्रमेण प्रश्नस्य उत्तरं दत्त्वा मौनभङ्गः कृतः तावत् वेतालः प्रेतं स्वीकृत्य पुनः वृक्षे आलम्बितः।

*- एन् शिवनागेश्वरराव:*






# मित्रद्वयस्य धनप्रत्यर्पणम्

गुरुनाथपुरे गोविन्दराज: नाम कश्चन गृहस्थ: निवसति स्म। तस्य मित्रद्वयम् आसीत्। शोभन: च बोधन: च। गोविन्दराज: धनवान् आसीत्। अत: एव शोभनबोधनौ तस्य मित्रतां गतवन्तौ। ''भवान् धनं पेटिकायां निगूढं स्थापयति। तेन क: लाभ:? तेन धनेन उद्योग: चालनीय:। तेन च भवान् एकस्य रूप्यकस्य दशरूप्यकाणि प्राप्स्यति'' इति मित्रद्वयं गोविन्दराज: प्रत्यवदत्। ''भवान् उद्योगार्थं धनव्यवस्थां करोतु। आवाम् उद्योगस्य सर्वाणि कार्याणि कारयाव:।'' इति मित्रद्वयेन उक्तम्।

गोविन्दराजस्य धनेन उद्योग: प्रारब्ध:। गोविन्दराज: मित्रद्वयस्य विश्वासं कृत्वा उद्योगस्य उत्तरदायित्वं तयो: दत्तवान्। किन्तु व्यापारे य: लाभ: अभवत् तथा य: मूलराशि: आसीत् तत् सर्वं मित्रद्वयं स्वस्य अधिकारे स्वीकृतवत्। तथा तौ गोविन्दराजम् उक्तवन्तौ ''व्यापारे हानि: अभवत्। धनं सर्वं नष्टम्।'' तेन च गोविन्दराजस्य कृते निर्धनता आपतिता।

गोविन्दराज: कदापि न ज्ञातवान् यत् तस्य मित्रद्वयं तस्य विश्वासघातं कृतवत्। मित्रद्वयं मिलित्वा तं कृतवत् तथापि स: तौ किमपि न उक्तवान्। स: पूर्वमिव तयो: स्नेहं दर्शयति स्म।

गच्छता कालेन गोविन्दराज: व्याधिग्रस्त: अभवत्। मृत्युकालं समीपं दृष्ट्वा स: शोभनम् आहूतवान्। यदा शोभन: आगतवान् तदा स: तम् उक्तवान्,'मित्र, शोभन, भवान् मम

वाय्. जयलक्ष्मी:




एकं कार्यं कृत्वा माम् उपकरोतु।'' शोभनः पृष्टवान्, ''भवान् किं कर्तुं कथयति?''

गोविन्दराजः उक्तवान्, ''अहम् अल्पकालं यावत् एव जीवामि। मरणात् पूर्वं 'मम धनं कुत्र कुत्र अस्ति?' इति मम भार्यायै कथयितुम् इच्छामि। किन्तु मम भार्या अतीव निष्पापा, सामान्या च अस्ति। यदा धनं हस्तगतं भवति तदा शीघ्रमेव तस्य व्ययं करोति।''

'एतस्य समीपे इतोऽपि धनम् अस्ति' इति चिन्तयित्वा शोभनः लोभग्रस्तः अभवत्। ''सत्यमेव स्त्रीणां हस्ते धनं तथा पुरुषाणां हस्ते बालकः न वर्धते। एषा लोकोक्तिः नूनं सार्था एव अस्ति।'' इति शोभनः उक्तवान्।

''व्यापारे यद् धनं गतं तद् तु गतमेव। किन्तु मम समीपे षोडशसहस्रं धनम् अवशिष्टम् अस्ति। ततः एकैकं सहस्रं एकैकं घटे स्थापयित्वा गृहस्य चतुर्षु प्रकोष्ठेषु चतुर्ष कोणेषु खनित्वा निगूढं कृतवान् अस्मि। षोडश घटाः सन्ति। एषा वार्ता मम पत्नी न जानीयात्। अतः भवान् इदानीं किं करोति इति शृणोतु''..... इति उक्त्वा गोविन्दराजः क्षणं यावत् कथनं स्थागितवान्।

''वदतु, वदतु'' इति शोभनः आतुरतया उक्तवान्। ''मध्ये मध्ये मम गृहगताम् अवस्थां पश्यतु भवान्। यदा मम भार्यायाः कृते धनस्य आवश्यकता अस्ति तदा एकैकं घटं खनित्वा तस्यै ददातु'' इति गोविन्दराजः अवदत्। ''एतेषां घटानां वार्ता कोऽपि न जानीयात्। बोधनमपि न कथयतु। तम् अहं न विश्वसिमि। अतः भवान् मम साहाय्यं करोतु इति अहं याचे।'' इति गोविन्दराजः अवदत्।

''अहं तथैव करोमि। मयि विश्वस्य आश्वस्तः भवतु भवान्।'' इति उक्त्वा शोभनः ततः निर्गतवान्।

तस्मिन् एव दिने सायङ्काले गोविन्दराजः द्वितीयं मित्रं बोधनमपि आहूतवान्। यदा सः आगतवान् तदा सः यद् शोभनाय कथितवान् तदेव बोधनायापि कथितवान्।

गोविन्दराजः एतद् अपि कथयितुं न विस्मृतवान् यद् 'यदि बोधनः तस्य कार्यं करोति तर्हि तम् उपकरोति एव। अपि च एतद् रहस्य शोभनः ज्ञातुं न शक्नुयात्'।

''सः यथा न जानीयात् तथा एव अहं वर्तेय। भवान् निश्चिन्तः भवतु। अहं सर्वं यथायोग्यं करिष्यामि'' इति निश्चयेन उक्त्वा बोधनः ततः निर्गतवान्।

कतिचन दिवसानन्तरं गोविन्दराजस्य पत्नी शोभनं प्रति आगतवती। सा उक्तवती, ''धनेन विना सद्यः अहं कष्टेन जीवनम् अनुवर्ते। मम पञ्चत्रिंशत् रूप्यकाणि आवश्यकानि।'' सः उक्तवान्,''मम समीपे धनं कुतः भवेत्? भवती च कतिकालपर्यन्तम् ऋणेन जीवनं यापयिष्यति? भवती स्वगृहस्य विक्रयणं करोतु। भवती एकसहस्ररूप्यकाणि प्राप्स्यति।''

''एतद् तु अहं पूर्वं न चिन्तितवती। यदि अहं गृहविक्रयणम् इच्छामि तर्हि अद्य रात्रौ सम्यक् विचार्य श्वः भवते सूचयिष्यामि।'' इति सा उक्तवती। तस्मिन् एव दिने सायङ्काले बोधनः तत्र आगतवान्।

तस्मै अपि गोविन्दराजस्य पत्नी कथितवती, ''अहं गृहस्य विक्रयणम् इच्छामि। शोभनः उक्तवान् यत् एकसहस्रपर्यन्तं रूप्यकाणि प्राप्स्यामि।'' एतद् श्रुत्वा बोधनः अवदत्,



''एकसहस्रं किम्? यदि भवती गृहविक्रयणम् इच्छति तर्हि अहं तु सार्धैकसहस्रं रूप्यकाणि दास्यामि।'' अन्येद्युः शोभनः प्रभातकाले शीघ्रमेव तत्र प्राप्तवान्। तं दृष्ट्वा गोविन्दराजस्य पत्नी बोधनेन कथितं वचनं तस्मै कथितवती। ''अहं द्विसहस्रं दास्यामि।'' इति शोभनः अवदत्। 'यत्र षोडशसहस्ररूप्यकाणि निगूढानि तस्य गृहस्य द्विसहस्ररूप्यकैः क्रयणं तु लाभाय एव। तत्र का आपत्तिः?' इति शोभनः चिन्तितवान्। प्रतिदिनमिव सायङ्काले बोधनः तत्र आगतवान्। गृहक्रयणार्थं सः सार्धद्विसहस्ररूप्यकाणि दातुं सिद्धः।

एवं द्वयोः मित्रयोः मध्ये क्रयणार्थं स्पर्धा अभवत्। प्रतिदिनं गृहस्य मूल्यं वर्धते एव।

अन्ते शोभन: दशसहस्रं दातुं सिद्ध: अभवत्। स: अचिन्तयत् यत् 'षोडशसहस्रत: दशसहस्रं यदि गच्छति तथापि षट्सहस्रम् अवशिष्टं भविष्यति'।

गोविन्दराजस्य पत्नी अज्ञा तु न आसीत्। सा चिन्तितवती यत् बोधन: इतोऽपि मूल्यं वर्धयिष्यति। किन्तु बोधन: मूल्यं न वर्धितवान्। शोभनस्य गृहं गत्वा स: अवदत्, ''भवान् तस्य गृहस्य कृते दशसहस्रं मूल्यं दातुं सिद्ध: अस्ति। किं भवान् अहिफेनं खादितवान् अस्ति?'' ''भवान् अपि अहिफेनं खादित्वा एव गृहस्य मूल्यं वर्धितवान्।'' इति शोभन: उपरोधेन उक्तवान्। द्वयमपि परस्परं वीक्ष्य रहस्यपूर्णं हास्यं कृतवत्। द्वयम् अपि चिन्तितवत् यत् एतद् रहस्यं द्वितीयेन कथं ज्ञातम्? अन्ते बोधन: उक्तवान्, ''दशसहस्रं कुत: आनयति भवान्? भवत: वित्तकोषे केवलं पञ्चसहस्रम् अस्ति।''

''भवत: वित्तकोषे अपि पञ्चसहस्रम् अस्ति। तद् भवान् मह्यम् ऋणेन ददातु। एकस्मिन् सप्ताहे एव अहं तद् प्रत्यर्पयामि।'' शोभन: उक्तवान्।

''एतद् एवं न भवेत्। आवाम् उभौ मिलित्वा दशसहस्रं दत्त्वा तद् गृहं क्रीणीव:। गृहं उभययो: भवेत्।'' बोधन: उक्तवान्।

पूर्वं गोविन्दराजस्य दशसहस्रं रूप्यकाणि मित्रद्वयम् अपहृतवत्। तान्येव रूप्यकाणि तौ आनीय गोविन्दराजस्य पत्न्यै दत्तवन्तौ गृहं च क्रीतवन्तौ। अनन्तरं द्वौ अपि तौ हस्ते कुद्दालकं गृहीत्वा गृहस्य कस्मिंश्चित् कोणे उपविष्टवन्तौ। तत्र खननं च कृतवन्तौ। तौ बहुधा खननं कृतवन्तौ किन्तु तौ घटान् कदापि न प्राप्तवन्तौ।





# वास्तविकः अग्निविस्फोटः

**य**दा माधवः गृहं प्राविशत् तदैव तं प्रति चेतनचिन्मयौ धावन्तौ आगच्छताम्। ''पितामह, अपि भवता श्रुतमेत्? अस्माकं सर्वे वयस्याः अग्निशलादीनि इव बहुविधानि गृहनिर्मितानि विस्फोटकानि क्रीणन्ति। तातः तु अस्माकं कृते एकस्मिन् संवत्सरेऽपि न किमपि क्रेतुमिच्छति, इति दृश्यते। नैकसंवत्सरेषु तातः तु केवलं अग्निशलाकाः एव क्रीणाति वदति च,'वयं तु इदानीम् बालकाः एव।' किन्तु पितामह, वयं तु अधुना ज्येष्ठाः जाताः खलु। वयमिदानीं दशवर्षीयाः। पितामह, भवान् कृपया ताताय कथयतु'' इति तौ द्वावपि पितामहाय त्वरया अकथयताम्। चैतनचिन्मययोः माता अनसूया तौ आश्वास्य अवदत्,''बालकौ, कृपया तिष्ठताम्। पितामहे गृहाभ्यन्तरे अनागते एव युवाभ्यां विलपनम् आरब्धम्।''

माधवः तौ अभ्यन्तरे आनयत् तयोः कृते मातामह्या कृतं मिष्ठान्नपदार्थं च ताभ्याम् अयच्छत्। द्वावपि बालकौ सर्वमेव विस्मृत्य मिष्टान्नपदार्थान् आस्वादयितुम् मग्नौ जातौ। ''अनसूये, अहं द्वौ अपि बालकौ दीपावली-उत्सवार्थं नयामि पूर्वनियोजनानुसारेण। उत्सवानन्तरम् अहं तौ पुनरानयामि इति'' माधवः अवदत्। अनसूयया पूर्वमिव सज्जीकृताः वस्त्रस्यूताः तेन गृहीताः। सः बालकौ गृहीत्वा वाहने उपावेशयत्। पितामहस्य समीपे बालकौ आनन्देन उपाविशताम्। वाहने संचलिते एव बालकौ प्रष्टुम् आरभताम्, ''स्फोटकानि..'' माधवः तौ अवारयत् अवदत् च, ''कृपया प्रतीक्षां कुरुतम्। किमर्थं त्वरा कर्तव्या? प्रथममहं युवाभ्यां कथामेकां कथयामि।''

अदूरी हैमवती



बालकौ उत्साहितौ जातौ।

''एकदा कस्मिश्चित् ग्रामे 'सूर्यः' नाम बालः अवर्तत। तस्यापि त्वत्समाना 'दीपावली' उत्सवः अतीव प्रियः। सः तस्य ताताय बहूनि अग्निविस्फोटकानि क्रेतुं वारंवारं कथयति स्म। सूर्यस्य पिता तस्मै कथयति, ''अग्निविस्फोटकानां क्रयणेन धनं न व्यर्थतां नेतव्यम्। दीनजनानां साहाय्यार्थं तु धनदानं कर्तव्यम्।'' सः सूर्याय इदमपि कथयति स्म, ''ज्वलन्ति विस्फोटकानि अतीव विनाशकानि भवितुमर्हन्ति अतः तत्र ज्येष्ठजनानां पर्यवेक्षणम् आवश्यकमेव।'' तत् विशेषतया महत्त्वपूर्णम् यतः तेषु दिवसेषु तत्र ग्रामे नैकपर्णकुटयः आसन्, ताः च अग्नौ भस्मीभूताः भवितुं शक्ताः।

''भवतु, यूयं दीपावल्युत्सवे अग्निविस्फोटकानि किमर्थं प्रज्वाल्यन्ते इति जानीथः?'' तयोः पितामहः अपृच्छत्।

''अग्निविस्फोटकानां प्रज्वलनेन वयं आनन्दिताः भवामः। यदा अस्माकं सङ्घेन विश्वचषकः सम्प्राप्तः तदा बहवः जनाः विस्फोटकानि स्फोटयन्तः दूरदर्शने अस्माभिः दृष्टाः। तथैव च निर्वाचनप्रक्रियानन्तरम् अस्माकं विजयोत्सवं सम्मानयितुम् अपि जनाः विस्फोटकानि स्फोटयन्ति। यदा जनाः उत्साहिताः भवन्ति तदा ते विस्फोटकानि स्फोटयन्ति। अपि एतद् सत्यम् नु?'' इति बालकौ अपृच्छताम्।

''अस्माकं तातस्य अग्निविस्फोटकानि किमर्थं न प्रियाणि?'' चेतनः अधीरतया अपृच्छत्।

''अहं तु तत्प्रश्नस्य उत्तरं ददामि एव। सूर्यः तथा च तस्य वयस्याः निभृतं वसोः गृहे एव गृहनिर्मितानि प्रज्वलकानि निर्मातुमारभन्त। तैः अङ्गारभस्मनः गन्धकस्य तथा च अन्यरसायनानां मिश्रणस्य वेष्टनम् कृतम्। वेष्टनार्थं तेषाम् अधिकानां कर्गजानामावश्यकता आसीत्। अतः तैः आगामिनि दिवसे तत् कर्तव्यम् इति व्यवसितम्।

तस्यां रात्रौ सूर्यस्य प्रतिवेशिनः नगरात् आनीतानि विस्फोटकानि ज्वालयन्ति स्म। ते अग्निबाणविस्फोटकैः सह क्रीडन्ति स्म। आकाशे प्रक्षेपितः सः अग्निबाणः वसोः गृहस्योपरि पतितः।

तत्गृहं पर्णशाखाभि: आच्छादितम् आसीत्। अत: तत् सलीलम् अग्निना प्रज्वलितम्। गृहाभ्यन्तरे निक्षिप्तानां रसायनानां स्फोट: अभवत्। तेन सप्ततिवर्षीय: अन्ध: वसो: पितामह: सुरक्षिततया गृहात् बहि: आगन्तुमसमर्थ: जात:।

तत्प्रसङ्गत: सूर्य: प्रज्वलितेभ्य: विस्फोटकेभ्य: अतीव भयभीत: अभवत्। तस्य मूर्खकृत्यकारणात् वसो: पितामहस्य निधनं जातम्, अत: स: आत्मानम् अपराधी मन्यते। तत: आरभ्य वसु: अपि सूर्य: इव विस्फोटकानां स्फोटनम् समहरत्। केवलं द्वौ एव बालकौ तस्य कारणम् अजानीताम्। ज्येष्ठजनेभ्य: कस्यापि गोपनम् अतीव भयानकम् इति तौ अवगच्छताम्। तत्दिवसत: ते चेष्टाकरणम् उपारमन्।

तस्मात् प्रसंगात् अनन्तरं कैश्चित् दिनै: तत्सहनार्थं वसु: असमर्थ: जात:। अश्रुपूर्णनेत्रै: सह स: तस्य पित्रे सर्वमकथयत्। वसो: पिता तस्य सत्यकथनकारणात् तम् अक्षाम्यत। ते दीपावल्युत्सवे कदापि विस्फोटकानि न स्फोटयन्ति। युवां चाणाक्षौ बालकौ एतद् विजानीताम् यत् वसु: एव युवाभ्यां पिता 'वसुदेवराव:' इति मे विश्वास:। अहम् आशासे यत् युवाभ्यां विस्फोटकानां भयम् अवगतं स्यात्।''

तेषु सम्भाषणमग्नेषु तेषां चतुर्चक्रिका कामपि मलजलनलिकां प्रति सम्प्राप्ता। माधव: वाहनचालकं गोपिनं वाहनं स्थगयितुम्



अकथयत्। स: वाहनात् बहि: आगच्छत् बालकौ च बहि: आगन्तुम् साहाय्यम् अकरोत्। स: तौ समीपस्थमेकं वृक्षं प्रति अनयत् आह्वयत् च,''नरसिंह,....., नारायणि..... कृपया अत्र आगच्छतम्। सर्वेऽपि अत्र बहि: आगच्छत।''

''आगच्छाम:....'' षष्ठिवर्षीय: वृद्ध: नरसिंह: अवदत् चेतनचिन्मयवयस्यान् त्रिंशद्बालकान् च आनयत्।

द्वौ अपि बालकौ तान् सूक्ष्मतया निरैक्षताम्। तेषां वस्त्राणि तेषां निर्धनतां सूचयन्ति स्म। तेषु कोऽपि पूर्णतया वस्त्रेण आच्छादित: नासीत्। वराका: ते बालका:! तत्र काश्चन दीना: बालिका: अपि आसन्। ता: च केवलं जीर्णशीर्णवस्त्राणि परिधृतवत्य:। तासां केशा: व्यवस्थिततया न

संहरिता: ता: च कारुण्यपूर्णा: दृश्यन्ते स्म। चेतन: चिन्मय: च तासां वस्त्राणि अपश्यताम् परस्परं च ऐक्षेताम्।

तौ प्रत्युत्सवस्य कृते आनीतानां स्ववस्त्राणां तुलनां तेषां मित्राणां वस्त्रै: सह कथं कुर्वन्ति, इति तौ अस्मरताम्। तौ तयो: मात्रा सह सदैव विवादं कुर्वत: शोभनतरवस्त्राणां कृते इति स्मरन्तौ तौ लज्जाम् अनुभूतवन्तौ। वाहनचालक: गोपी माधवस्य वाहनत: सर्वाणि स्यूतानि बहि: उदधारयत्। माधव: तत्स्यूतत: कानिचित् नूतनानि वसनानि चिन्मयाय चेतनाय च अयच्छत् वितरणार्थम्।

तान् बालकान् तानि वस्त्राणि परिधानार्थं स: नरसिंहेन नारायण्या गोपिना च सह साहाय्यमकरोत्। तदनन्तरं तेषाम् अव्यवस्थिता: केशा: सरला: कारिता: तथा च प्रसाधन्या: साहाय्येन संस्कारिता:। तत: ते तेषां बहूनि छायाचित्राणि अगृह्णन्।

तदनन्तरम् ते सर्वेषु बालेषु मिष्टान्नपदार्थानि व्यतरन्। बालकानां मुखानि आनन्देन प्रकाशितानि। माधव: तानि प्रदीप्तानि मुखानि चेतनं चिन्मयं च दर्शयित्वा अभणत्,''प्रियौ वत्सौ, तेषां हर्षनिर्भराणि मुखानि प्रति पश्यताम्। तानि तु पुष्पाणां पात्राणि एव यानि पोषणमकृत्वा अपि उत्फुल्लानि जातानि। तथा च तानि रजतयष्टिका: एव या: अप्रज्ज्वाल्य अपि प्रज्ज्वलितानि। अपि युवाभ्यां रोचते तत्?''

द्वौ अपि बालकौ पितामहस्य हस्तं सहर्षं गृहीत्वा सानन्दम् अगदताम्,''अस्मभ्यं रोचते तत्। आवाम् इत:परम् उत्सवार्थं नूतनवसनानि न याचेवहि। दीपावल्यर्थं च विस्फोटकानि अपि न। आवां तु मातरं पितरं च कदापि न क्लिश्यावहे। आवां तु सर्वधनं रक्षेव धनसञ्चयपेटिकायाम्। तथा च केवलं विस्फोटकानां स्फोटनं संपश्याव:।''





# पञ्चतन्त्रकथा

## कथा नागकुमारस्य

राजगृहे आसीत् कश्चन देवशर्मा नाम ब्राह्मण:। निपुत्रिकस्य तस्य पत्नी अन्येषाम् अपत्यानि दृष्ट्वा सदैव विलपति स्म। देवशर्मणा तु स्वपत्नी स्वप्राणेभ्य: अपि इष्यते स्म। अथ कदाचित् स: ताम् उक्तवान्,"प्राणप्रिये, अलमधुना रोदनेन। अहं पुत्रकामेष्टियज्ञं करिष्ये। तदा काचित् देवता प्रत्यक्षीभूय वदेत्, 'हे विप्रवर, तव शोभन: दीर्घायु: तथा भाग्यवान् पुत्र: जायेत'' इति।

तच्छ्रुत्वा ब्राह्मणपत्नी परमानन्देन "तथास्तु" इति अगदत्।

देवशर्मणा पुत्रकामेष्टियज्ञे कृते सति तस्य पत्नी गर्भवती सञ्जाता। पुत्रजन्मन: विचारेण एव तस्या: मन: मोदेनावृतम्। किन्तु प्रसवकाले सा न अपत्यम् अपि तु एकं सर्पं प्रसूतवती।

प्रसूतं सर्पं दृष्ट्वा तत्र समागताभि: महिलाभि: आक्रोश: कृत:, "शान्तं पापम्! अयं न बालक:। सर्पोऽयं दूरं क्षेप्तव्य:।" किन्तु देवशर्मण: पत्नी तं न क्षिप्तवती। सा तु तं प्रेम्णा स्व-अङ्के स्थापितवती। सा तं स्नापयित्वा निर्मले वस्त्रे आच्छाद्य एकस्मिन् पात्रे प्रस्थाप्य प्रतिदिनं दुग्धं पाययति स्म नवनीतं च भोजयति स्म।

एवं कतिचन वर्षाण्यतीतानि। अथैकदा देवशर्मण: प्रतिवेशिन: युवकस्य विवाह: अभवत्। तद् दृष्ट्वा रुदती ब्राह्मणपत्नी देवशर्माणम् उक्तवती, "आवयो: पुत्रस्य विवाहविषये किं चिन्तितं भवता इतोऽपि?" इति।

स्वभार्याया: अश्रूपूर्णे नयने विलोक्य देवशर्मा तां ज्ञापयन् उक्तवान्, "हला, सर्पाय

मित्रभेद:-२३



को वा कन्यां दद्यात्? पाताललोकं गत्वा वासुकीनागः प्रार्थनीयः भवेत् यद् आत्मनः पुत्राय वधूरुपेण कन्यां यच्छेत् इति। नान्या गतिः वर्तते।''

पत्युः वचनानि श्रुत्वा देवशर्मणः भार्या उच्चैः रुदती आक्रोशं कृतवती। तेन देवशर्मणः हृदयं द्रवीभूतम्। सः पाथेयं स्वीकृत्य नागपुत्रस्य कृते वधू-अन्वेषणाय प्रस्थितः।

एवं बहवः मासाः अतीताः। अनन्तो सः दूरे स्थितं कुट्कुटं नाम ग्रामं प्राप्तः। तत्र देवशर्मणः किञ्चन धनसम्पन्नं मित्रं तथा आप्तः आसीत्। तस्य एव गृहं गतवान् देवशर्मा। गृहे स्नानं कृत्वा तेन भोजनमपि कृतम्। तस्यां रात्रौ शयनार्थं शर्मणा मित्रस्य गृहमेव आश्रितम्। द्वितीये अहनि प्रातः काले यदा सः मित्रगृहात् साधयन् आसीत् तदा मित्रेण पृष्टं ''भद्रमुख, भवता एतत्तु नैव उक्तं यद् अत्र केन प्रयोजनेन भवान् आगतः आसीत्। इतः परं च कुत्र गम्यते भवता?''

''अहं मम पुत्रस्य कृते वधुम् अन्वेष्टुं गृहात् निर्गतोऽस्मि'' देवशर्मा उदतरत्।

''एवं तर्हि, ममापि पुत्री विवाहयोग्या जाता अस्ति। भवतः पुत्रस्य मम पुत्र्या सह परिणयं कस्मात् न कारयति भवान्?

आवां सुहृदौ आप्तौ तु स्वः एव। अधुना अनेन विवाहेन सम्बन्धिनौ भवावः। किं चिन्तनं भवतः?''इति पृष्टं मित्रेण।

''देवशर्मा अतिप्रसन्नमनसा मित्रस्य प्रस्तावम् अङ्गीकृतवान्। सः पुत्रवध्वा सह तस्याः दास-दासीभिः सह स्वनगरं प्राप्तः।

वध्वाः असाधारणं सौन्दर्यं ज्ञात्वा तां द्रष्टुं नगरे सर्वत्र सम्मर्दः जातः। सर्वेषाम् एका एव चिन्ता आसीत् यद् 'एतस्याः सौन्दर्यवत्याः युवत्याः परिणयः केनचित् सर्पेण सह भविष्यति' इति। तां विलोक्य जनानां मनसि दयाभावः उत्पन्नः। सर्वे नगरवासिनः युवत्याः कुटुम्बजनान् अवदन्,''ये आत्मानं धर्मपालकाः मन्यन्ते ते सज्जनाः रत्नमिव कान्तिमत्याः अस्याः सुपुत्र्याः विवाहं सर्पेण सह कर्तुमिच्छन्ति। किं नायम् अन्यायः?'' युवत्याः दासीभिः अनुक्षणम् इयं वार्ता तस्यै श्राविता।



आश्रितम्। द्वितीये अहनि प्रात: काले यदा स: मित्रगृहात् साधयन् आसीत् तदा मित्रेण पृष्टं "भद्रमुख, भवता एतत्तु नैव उक्तं यद् अत्र केन प्रयोजनेन भवान् आगत: आसीत्। इत: परं च कुत्र गम्यते भवता?"

"अहं मम पुत्रस्य कृते वधुम् अन्वेष्टुं गृहात् निर्गतोऽस्मि" देवशर्मा उदतरत्।

"एवं तर्हि, ममापि पुत्री विवाहयोग्या जाता अस्ति। भवत: पुत्रस्य मम पुत्र्या सह परिणयं कस्मात् न कारयति भवान्?

आवां सुहृदौ आप्तौ तु स्व: एव। अधुना अनेन विवाहेन सम्बन्धिनौ भवाव:। किं चिन्तनं भवत:?"इति पृष्टं मित्रेण।

"देवशर्मा अतिप्रसन्नमनसा मित्रस्य प्रस्तावम् अङ्गीकृतवान्। स: पुत्रवध्वा सह तस्या: दास-दासीभि: सह स्वनगरं प्राप्त:।

वध्वा: असाधारणं सौन्दर्यं ज्ञात्वा तां द्रष्टुं नगरे सर्वत्र सम्मर्द: जात:। सर्वेषाम् एका एव चिन्ता आसीत् यद् 'एतस्या: सौन्दर्यवत्या: युवत्या: परिणय: केनचित् सर्पेण सह भविष्यति' इति। तां विलोक्य जनानां मनसि दयाभाव: उत्पन्न:। सर्वे नगरवासिन: युवत्या: कुटुम्बजनान् अवदन्,"ये आत्मानं धर्मपालका: मन्यन्ते ते सज्जना: रत्नमिव कान्तिमत्या: अस्या: सुपुत्र्या: विवाहं सर्पेण सह कर्तुमिच्छन्ति। किं नायम् अन्याय:?" युवत्या: दासीभि: अनुक्षणम् इयं वार्ता तस्यै श्राविता।

को वा कन्यां दद्यात्? पाताललोकं गत्वा वासुकीनाग: प्रार्थनीय: भवेत् यद् आत्मन: पुत्राय वधूरुपेण कन्यां यच्छेत् इति। नान्या गति: वर्तते।"

पत्यु: वचनानि श्रुत्वा देवशर्मण: भार्या उच्चै: रुदती आक्रोशं कृतवती। तेन देवशर्मण: हृदयं द्रवीभूतम्। स: पाथेयं स्वीकृत्य नागपुत्रस्य कृते वधू-अन्वेषणाय प्रस्थित:।

एवं बहव: मासा: अतीता:। अनन्तो स: दूरे स्थितं कुट्कुटं नाम ग्रामं प्राप्त:। तत्र देवशर्मण: किञ्चन धनसम्पन्नं मित्रं तथा आप्त: आसीत्। तस्य एव गृहं गतवान् देवशर्मा। गृहे स्नानं कृत्वा तेन भोजनमपि कृतम्। तस्यां रात्रौ शयनार्थं शर्मणा मित्रस्य गृहमेव

तत्र समागतैः बुद्धिमद्भिः वृद्धजनैः च उच्चैः घोषणा दत्ता, "सुन्दरीयं सर्पपत्नी न भूयात्। कृपया तां रक्षन्तु" इति।

सर्वमिमं वृत्तान्तं श्रुत्वा सा कन्या अब्रवीत्, "भवन्तः सर्वेऽपि शान्तमनसः भवन्तु कृपया। एतत्तु वृद्धैः एव कथ्यते यद् यथा राजा एकवारं दत्तम् आदेशं पुनः न प्रत्याहरति। यथा च सज्जनानां मुखात् निर्गतं वचनं न कदापि परिवर्तति। तथैव कन्यादानं यद् एकवारं दत्तं तद् दत्तमेव। परमेश्वरस्य निर्णयः एषः न परिवर्तेत। विधिलिखितं कोऽपि परिवर्तयितुं न शक्नोति। स्वयं ईश्वरः अपि पुष्पकं मृत्योः हस्तात् रक्षितुं न शक्तवान्।"

"का कथा पुष्पकस्य?" सम्मर्दस्थितैः जनैः पृष्टम्। वधूः तेभ्यः इमां कथां श्रावितवती-

**कथा पुष्पकस्य**

**पूर्वं** विविधशास्त्रेषु तथा विद्यासु निपुणः एकः सुन्दरः शुकः इन्द्रदेवस्य सविधे आसीत्। पुष्पकः इति तस्य अभिधानम्। एकदा इन्द्रस्य हस्ते उपविश्य वार्तालापे मग्नः सः यमराजं दृष्ट्वा भीत्या पलायितः । सर्वे देवाः पुष्पकं पृष्टवन्तः यत् तथा तेन किमर्थं कृतम् इति। पुष्पकः उक्तवान्, "सर्वेषां प्राणिमात्राणां कृते हानिकारकः अयं यमदेवः। तं दृष्ट्वा किं पलायनं न करणीयम्? किं प्रत्युत तत्रैव स्थातव्यम्?"

ततः सर्वे देवाः यमराजं प्रार्थितवन्तः "भवान् पुष्पकं न मारयतु" इति। "अहं तु कालस्य सेवकः अस्मि। न कोऽपि अधिकारः मदधीनः वर्तते। यदि भवन्तः पुष्पकं जीवितम् इच्छन्ति तर्हि तदर्थं भवद्भिः कालः प्रार्थनीयः" इति अगदत् यमराजः।

सर्वे कालं प्रति गतवन्तः। कालः तु उक्तवान् 'भवन्तः मृत्युं पृच्छन्तु' इति। ततः सर्वेऽपि देवाः मृत्युं प्रति गत्वा पृष्टवन्तः। किन्तु दृष्टे सत्येव मृत्यौ पुष्पकेण प्राणत्यागः कृतः।

*(अनुवर्तते)*





# जगत: परिष्कार:

पुरा विक्रमकेतो: राज्ञ: राज्ये बहुकालपर्यन्तं पर्जन्य: न अभवत्। तेन अवर्षणेन राज्ये दुष्काल:, दुर्भिक्षम् च अभवत्। एतां परिस्थितिं नियन्तुं राजा प्रयत्नम् अकरोत्।

राज्ञ: कोषत: व्यय: वर्धते स्म। तदानीं च अन्या एका समस्या राज्ये आपतिता। राज्यस्य सीमावर्तिषु प्रदेशेषु वन्या: प्राणिन: भ्रमन्ति स्म। तै: प्राणिभि: तेषु प्रदेशेषु निवसतां जनानां जीवनं भयग्रस्तं कृतम्।

राजा 'अस्माकं साहाय्यं करोतु' इति जना: साग्रहं निवेदनं कृतवन्त:। राज्ञ: कोष: समाप्तिं गच्छन् इव आसीत् अत: एतद् कार्यं स्वयमेव कर्तुं राजा निर्णीतवान्। राजा स्वयमेव एतद् कार्यं साधयितुं गमिष्यति इति विचार: मन्त्रिणे न रोचते स्म।

''जनानां समस्यासु य: राजा प्रतिक्रियां न दर्शयति स: राजा क्रूर:, राज्याधिकारलोभी, स्वच्छन्द:, एकचालकानुवर्ती राजा एव। मम जीवने एतदेव ध्येयम् अस्ति यत् उत्तम: प्रशासक: इति रूपेण अहं जनानाम् आदरस्य भाजनं भवामि।'' इति विक्रमकेतुं प्रत्यवदत्। स: च मृगयार्थं गन्तुं सज्जतां च अकरोत्।

मन्त्री अपि तस्य अनुसरणम् अकरोत्। द्वौ अपि अरण्ये भ्रमणं कृतवन्तौ। सहसा गुल्मकस्य पृष्ठत: निगूढ: एक: व्याघ्र: ताभ्यां दृष्ट:। स: व्याघ्र: तयो: उपरि आक्रमणं कुर्यात् तस्माद् पूर्वमेव विक्रमकेतु: झटिति प्रतिक्रियां कृतवान्। स: व्याघ्रं प्रति बाणं व्यमुञ्चत्।

**बी.व्ही. पटनायक**

व्याघ्र: गर्जनां न कृतवान्। आश्चर्यचकितौ तौ किमिति द्रष्टुं व्याघ्रसमीपं गतवन्तौ। सा व्याघ्रस्य मूर्ति: आसीत्! तौ अग्रे गतवन्तौ। तत्र एक: सिंह: हरिणं मुखे धृत्वा तिष्ठन् ताभ्यां दृष्ट:। स्वसंरक्षणार्थं विक्रमकेतु: स्वस्य बाणं सिंहं प्रति प्रक्षेप्तुं वेध्यं लक्षितवान्।

मन्त्री उक्तवान्, ''एषा अपि मूर्ति: एव अस्ति।'' यदा तौ चरन्तौ अरण्ये पुरत: गतवन्तौ तदा सजीवानाम् इव वन्यप्राणिनां मूर्ती: यत्र यत्र दृष्टवन्तौ। मन्त्री अचिन्तयत् यत् प्रतिवेशी राजा एतां योजनाम् अवलम्ब्य अस्माकं देशवासिनां भयम् उत्पादयितुम् इच्छति। अथ अरण्ये कश्चित् पुरुष: तादृशीमेव मृण्मयीं वन्यपशुमूर्तिं विविधवर्णै: वर्णयन् स्थित: ताभ्यां दृष्ट:। मन्त्री तं पुरुषं योजनागत: कर्मकर: इति ज्ञातवान्। स: अधिकारवाण्या तम् अपृच्छत्, ''भवान् क: ?'' य: पुरुष: मूर्तिं वर्णयन् उपविष्ट: स: तौ दृष्ट्वा आदरेण उत्थाय स्थित:।

अथ स: प्रत्यवदत्, ''अहम् अस्य देशस्य नागरिक: अस्मि। अहं मूर्तिकार: अस्मि।'' ''अस्माकं प्रतिवेशिन: शत्रून् मिलित्वा तेषां योजनानुसारं भवान् एतद् कार्यं कुर्वन् अस्ति वा ?'' इति मन्त्री क्रोधेन पृष्टवान्।

''अहं मम मातृभूमौ स्नेहकारणात् एतद्



कार्यं कुर्वन् अस्मि। अस्माकं शत्रुणा सह मम क: अपि सम्बन्ध: संपर्क: वा नास्ति। मम कलाया: कारणात् अहं मम देशस्य गौरवं वर्धयामि।'' इति मूर्तिकार: स्वस्य कलाकौशल्यस्य सार्थम् अभिमानं धारयन् उक्तवान्। राजा विक्रमकेतु: तम् उक्तवान्, ''अहं भवन्तम् अभिनन्दये। भवत: वन्यप्राणिनां मूर्तय: सजीवा: इव। किन्तु भवान् एताभि: मूर्तिभि: स्वस्य देशस्य एव हानिं जनयन् अस्ति। जना: 'एता: मूर्तय: सजीवा: प्राणिन: सन्ति' इति चिन्तयन्ति। ते भयम् अनुभवन्ति। ते अरण्यं प्रति आगन्तुं न शक्नुवन्ति। जनानां मनस्सु भयस्य

उत्पादनम् अपराधः एव अस्ति ननु?''

''आम्। देव, अपराधः एव अस्ति। किन्तु तेन एव कारणेन, जनानां मनस्सु भयम् उत्पादयितुम् एव अहं मूर्तिनां निर्माणं करोमि।'' इति मूर्तिकारः प्रत्यवदत्। मन्त्री क्रोधेन पृष्टवान्, ''कथं भवान् एतादृशं साहसम् आचरति? भवान् एतेन कार्येण किं साधयितुम् इच्छति?'' ''कृपया क्रोधं मा करोतु। अहं जानामि यत् अस्माकं राज्ये अरण्यानां कर्तनस्य कारणात् वयं सम्यक् पर्जन्यं न प्राप्नुमः। पुरा अस्मिन् अरण्ये बहवः बन्यप्राणिनः निवसन्ति स्म। अतः जनाः अरण्यकर्तनस्य साहसं न कुर्वन्ति स्म। यदि वयम् अरण्यस्य विनाशस्य प्रतिबन्धं कर्तुं न समर्थाः, तर्हि वयम् स्वहस्तेन अस्माकं पुत्रपौत्रानां भविष्यस्य विनाशं कुर्वन्तः भवामः। अरण्यरक्षणार्थं यथाशक्ति प्रयत्नं कर्तुं, मम सहयोगं दातुम् अहम् एताः मूर्तीः निर्मातुं प्रारब्धवान्। जनाः चिन्तयन्ति यत् एते सजीवाः प्राणिनः सन्ति। तेन ते अरण्यं प्रति आगन्तुं भयम् अनुभवन्ति।

यदा जनाः अरण्यं प्रति आगन्तुं न शक्नुवन्ति तदा अरण्ये वृक्षाणां वर्धनं, पुनरुत्पादनं, सजीवानां च संवर्धनं शक्यं भवेत् इति अहम् आशासे। तेन अरण्यस्य संवर्धनं भवेत्।'' इति मूर्तिकारः अवदत्। राजा विक्रमकेतुः मूर्तिकारस्य कृतवान्। सः तम् अपृच्छत्, ''अहं भवतः कृते किं करोमि?''

''कृपया रहस्यं जनाः न जानीयुः।'' इति मूर्तिकारः अवदत्। ''भवान् इदानीं यान् प्रयत्नान् करोति, कष्टान् च सहते तेषां फलं वयं भविष्यत्काले पर्जन्यरूपेण प्राप्नुमः।'' इति राजा विक्रमकेतुः उक्तवान् स्नेहेन च तं मूर्तिकारम् आलिङ्गितवान्।






# एष: एव श्रेष्ठ:

"**भो:** आनन्द! कथमसि?" क: आह्वयति इति द्रष्टुम् आनन्द: पृष्ठत: पश्यति। "ओहो:! अरविन्द! सत्यं खलु? कथमसि त्वम्?" आनन्दोऽवदत्।

बहुवर्षानन्तरम् अनपेक्षितं मेलनं नाम सहपाठीनां कृते असीम: आनन्द:। द्वौ अपि एकस्मिन्नेव विद्यालये पठितवन्तौ। उच्चशिक्षणार्थम् आनन्द: समीपवर्तिनं नगरं गतवान्। अनन्तरं स: अभियन्ताऽभवत् तथा च एम्.एन्.सी. मध्ये उच्चवेतन-कार्यं प्राप्तवान्। अरविन्देन तु अभियान्त्रिकीविषये पदविकां प्राप्य तेन स्वग्रामे वस्त्रोद्योग: आरब्ध:। तत: परं मित्रयो: सम्पर्क: नासीत्। परस्परयो: वर्तमानं द्वावपि न जानीत:।

कुशलप्रश्नानन्तरं य: संवाद: जात:, तत्र सहपाठिन: अरविन्दस्य जीवनपद्धत्या सह स्वजीवनस्य तुलनां कर्तुम् आरब्धवान् नगरवासी आनन्द:। अरविन्द: अधुनाऽपि तस्मिन्नेव गृहे स्वकुटुम्बेन सह सामान्यजीवनपद्धतिम् अनुसरन् आसीत्। तदा एव आनन्द: कार्यालयत: प्राप्तम् उच्चतरम् आवासम्, सुविधं कारयानं तथा च आङ्ग्लमाध्यमेन पठद्भ्यां अपत्याभ्यां सह तन्वीं पत्नीं स्मृत्वा गर्वेण प्रफुल्लित:।

अनन्तरम् अरविन्द: तं स्ववस्त्रोद्योगं दर्शयितुं वस्त्रशालां नीतवान्। तत्र प्रविश्य आनन्द: तुच्छतया अचिन्तयत् "हे भगवन्! कियत् पुरातनं तन्त्रज्ञानं, पुरातनानि च

डी. जानकी

यन्त्राणि, अशिक्षिता: कर्मकरा: ,कथं च एतत् स्थानम्! इदं सर्वं नाम एतस्य कृते 'वस्त्रोद्योग:! कियत् धैर्यम्!''

पुन: एकवारं स्वकार्यशालाम् आधुनिकानि परदेशीयानि यन्त्राणि प्रगतं च तन्त्रज्ञानम् इत्यादिकं विचिन्त्य स: हर्षितोऽभवत्। स: अचिन्तयत् 'मत्कृते तु एष: सूर्यप्रकाशे खद्योत:'।

तदा तस्य मन:पटलं द्रष्टुं समर्थ: इव अरविन्द: शनै: उक्तवान्-''अत्याधुनिक-कार्यशालायां कार्यं कुर्वत: तव पुरत: तु अस्य छदस्य 'वस्त्रशाला' इति परिचय: नाम मूर्खता एव इति जानामि। एते कर्मकरा: तथा च तव उत्तमा: तन्त्रज्ञा: एतयो: तुलना नैव भवेत्। असहाया: विधवा:, अबला: स्त्रिय:, अनाथा: इत्यादिका: मम कर्मकरा:। वस्तुत: एष: उद्योग: धनार्जनार्थं नैव। अहं तु मम जनकस्य तत्त्वम् अनुसरामि। स: नित्यमेव वदति 'केवलं स्वकुटुम्ब-पोषणार्थम् अर्थार्जनं मास्तु। जीवनं परार्थाय भवतु। दीन-असहायानां साहाय्यम् इत्येव अस्माकं कर्तव्यम्।' अहमपि तदेव आचरामि। असहायानां कृते जीवामि। उच्चपदस्थ: भूत्वा यद् धनं त्वं प्राप्नोषि तस्य अपेक्षया यद् समाधानम् मया प्राप्यते तद् बहुमूल्यम्।''

एतत् श्रुत्वा अरविन्द: उद्विग्न: जात:। अकस्मात् तस्य मिथ्याज्ञानम् अपगतम्-अरविन्द: वदति तदेव सत्यमिति। आनन्द: केवलं स्वपरिवारार्थम् अर्थार्जनं करोति। तस्य मित्रं तु अन्येषां कृते कार्यरत:। 'एषा ममैव मूर्खता, यदहम् मम एतं मित्रं कनिष्ठं मत्वा गर्वित: अभवम्।'

आनन्द: नतमस्तको भूत्वा मनसि अवदत् 'सत्यमेव! एष: एव श्रेष्ठ:।'





# नृपस्य क्रोधः

**म**ञ्जूषापुरनगर्याः राजा महेन्द्रवर्मा अतीव शीघ्रकोपी आसीत्। एकदा तेन भोजनमध्ये अतिलघुः अश्मखण्डः लब्धः। तस्मिन् चर्वणीकुर्वति सः अश्मा तस्य दन्तमध्ये आगतः। सः क्रुद्धः जातः। सः स्वस्य पाचकं गोविन्दम् आहूतवान्। गोविन्दः भयेन अकम्पत क्षमां च अयाचत। किन्तु राजा न अन्वमन्यत। एतावतः अल्पस्य दोषस्य कृते राजा 'अस्य हस्तद्वयस्य खण्डनं करोतु' इति अदण्डयत्।

अनन्तरम् एकदा राजा शिवानन्दस्य गायकस्य सङ्गीतं शृण्वन् आसीत्। एकस्मिन् अवसरे शिवानन्दस्य किञ्चित् स्वरभङ्गः जातः। तदा राजा एतावतः अल्पस्य दोषस्य कृते तं दण्डयितुम् आदेशं दत्तवान्। सः गायकाय मृत्युदण्डं दत्तवान्।

किन्तु राजा महेन्द्रवर्मा न प्रमाणीकरोति स्म यत् तेन क्रोधेन दत्ताः दण्डाः अनुष्ठाताः वा न वा इति।

एकस्मिन् दिने राजा महेन्द्रवर्मा स्वस्य राजधान्यां मार्गेषु अटन् आसीत्। तदा तेन गोविन्दशिवानन्दौ दृष्टौ, यौ तेन दण्डितौ आस्ताम्। गोविन्दः द्वाभ्यां हस्ताभ्यां शाकं क्रीणन् दृष्टः।

शिवानन्दः तु शालां चालयन् बालकान् अध्यापयन् च दृष्टः। महेन्द्रवर्मा तौ अभिज्ञातवान्। तौ अदण्डितौ दृष्ट्वा सः विस्मितः अभवत्। सः प्रासादम् आगम्य

एम्. मुरली मोहन

अचिन्तयत् यत् एतदर्थे प्रधानमन्त्री एव अनुयोज्यः। सः स्पष्टीकरणं दातुं तम् आहूतवान्।

यदा प्रधानमन्त्री आगतः तदा राजा तम् अतीव क्रोधेन पृष्टवान् ''मया पाचकगायकौ दृष्टौ यौ मया पूर्वमेव दण्डितौ। भवता तौ किमर्थं दण्डमुक्तौ रक्षितौ? तेन च मम आदेशानां मूल्यं किमर्थं न्यूनं कृतम्?''

प्रधानमन्त्री नृपक्रोधस्य कारणं ज्ञातवान्। सः प्रत्यवदत् ''महाराज, भवता क्षणिके आवेशे ताभ्यां क्षुद्राणां दोषाणां कृते असंयुक्ताः दण्डाः दत्ताः। तथैव अहं चिन्तयामि यद् मया भवतः आदेशेषु निष्ठिताः विचाराः अङ्गीकृताः।''

''तर्हि मया कथं ज्ञातव्यं यत् मम आदेशाः अङ्गीकृताः वा न वा इति?''

प्रधानमन्त्री ज्ञातवान् यद् राजा अधुना किञ्चित् अल्पकुपितः अस्ति। सः प्रत्यवदत्, ''महाराज, भवान् पाचकं तथा च गायकं तेषां उपजीविकायाः दृष्ट्या दण्डितवान्। भवान् तेभ्यः वैयक्तिकरूपेण कुपितः नासीत्। अतः अहं तौ तयोः स्थानात् निष्कासितवान्। अहं गोविन्दस्थं पाचकं तथा च शिवानन्दस्थं गायकं दूरीकृतवान्। तेन च मया भवता दत्तौ दण्डौ एव अङ्गीकृतौ किन्तु अहिंसकेन मार्गेण'' इति।

तदा राजा महेन्द्रवर्मा ज्ञातवान् यत् कथं तस्य क्षणिकेन आवेशेन जनाः उपहताः जायन्ते स्म। तथा च सः स्वस्य प्रधानमन्त्रिणः प्रशंसां कृतवान् यतः सः एव तान् नृपस्य अर्थशून्यात् क्रोधात् रक्षितवान्। ततः प्रभृति राजा निश्चयम् अकरोत् यत् 'सः स्वस्य क्रोधं सीमितं रक्षेत्' इति।






# सम्मार्जन-सेवकस्य विवाहः

**पु**रा कदाचित् चतुःशतवर्षात् पूर्वं मैसूरराज्ये पुरुषोत्तमः नाम राजा शासनं करोति स्म। सः गङ्गवंशे जातः गौरवान्वितः शासकः आसीत्। यद्यपि सः विवाहयोग्यवयाः सञ्जातः तथापि सः विवाहं न कृतवान्। यावत् अनुरूपा वधूः न प्राप्यते तावत् विवाहं न करोमीति तेन प्रतिज्ञातमासीत्।

तस्मिन् समये काञ्चीपुरे काञ्चीराजस्य एका कन्यासीत्। सा त्रिलोकसुन्दरी इति नाम्ना प्रसिद्धासीत्। सत्यमेव तत्सदृशी त्रैलोक्ये न कापि सुन्दरी। जनेषु एषा वार्ता मन्दं मन्दं प्रसृता यत् काञ्चीराजस्य एषा स्वर्गीय-सुन्दरी राजकन्या पुरुषोत्तमाय अनुरूपा इति।

एषा वार्ता पुरुषोत्तमस्य पित्रापि श्रुता। सः सत्वरं राजपुरोहितं काञ्चीराजस्य समीपे प्रेषितवान्, विवाहविषये वार्ताः आरब्धवान् च। विवाहस्य सज्जता प्रारब्धा। काञ्चीराजेन मैसूरमहाराजस्य गौरवाय योग्या सर्वा सज्जता कृता। तथा पृष्ट्वा पृष्ट्वा तेन भोगविलासस्य सर्वाणि वस्तूनि सङ्गृहीतानि। न किमपि न्यूनता स्यात्तत्र इति विषये सः अतीव दक्षः।

पुरुषोत्तमः उन्नते कुले उत्पन्नः पुत्रः आसीत्। तेन तस्य शक्तिसामर्थ्यं प्रभूतमासीत्। अन्यत् नाम सः अतीव उदारहृदयः आसीत्। तस्मिन्नेव काले पुरुषोत्तमः काञ्चीराजकुमारीम् अपश्यत्। प्रथमदर्शने एव द्वौ परस्परानुरक्तौ। द्वयोः मिथः सम्मतिरपि जाता।

एवं प्रकारेण एकेन अनुकूलेन योग्येन च

आर्. जयन्ती



वरेण सह कन्यायाः विवाहः भवतीति काञ्चीराजः अतीव प्रसन्नः आसीत्। पुरुषोत्तमः अपि एषः विवाहसम्बन्धः निश्चितः जातः इति मत्वा स्वराज्यं प्रत्यागच्छत्। परन्तु पुरुषोत्तमस्य गमनानन्तरं काञ्चीराजस्य मनसि कश्चन सन्देहः समुत्पन्नः। कः सः सन्देहः इति शृण्वन्तु–

गङ्गवंशस्य राजानः वंशपरम्परागतां जगन्नाथस्य पूजां कुर्वन्ति। तस्यां पुण्यक्षेत्र-जगन्नाथपुर्यां जगन्नाथमन्दिरमपि गङ्गवंशीय-राजभिः एव निर्मितमासीत्। जगन्नथस्य अनुयायिनः एते भगवतः सेवायां न कामपि न्यूनतां आचरन्ति स्म न वा अन्यद्वारा भगवतः सेवां कारयन्ति स्म। यावच्छक्यं स्वयं स्वहस्तैः एव भगवतः सेवाकार्यं तेषां वंशाचारः आसीत्।

एवं वंशपरम्परानुसारं पुरुषोत्तमेनापि जगन्नाथस्य मन्दिरं गत्वा उत्सवसमये भगवतः सेवायां सुवर्णस्य सम्मार्जन्या तत्र सम्मार्जनं करणीयं भवति स्म। तां सेवां च सः अतीव आनन्देन विदधाति स्म।

काञ्चीराजाय एषः व्यवहारः सङ्कोचजनकः लांच्छनास्पदः चाभासत्। केनचित् सम्मार्जनरक्षकेण सह राज्ञः मम कन्यायाः विवाहः! तस्मै एतद् अपमानास्पदम् अभासत। अतः सः निरणयत् यत् सः तस्मै कन्यां न यच्छेत्। एषा वार्ता पुरुषोत्तमाय अपि प्रापिता।

पूर्वं विवाहनिश्चयं कृत्वा अनन्तरं विवाहच्छेदः इति बुद्ध्या कृतं कपटमेव अमन्यत पुरोषोत्तमः। काञ्चीराजेन या वार्ता प्रेषिता तां श्रुत्वा पुरुषोत्तमस्य क्रोधः असीमितः जातः। सोऽचिन्तयत् एवं मम अवमाननं कृत्वा तेन प्रत्यक्षं भगवतः जगन्नथस्य एव अवमाननं कृतमस्ति। काञ्चीराजेन अस्य अवमाननस्य मूल्यं दातव्यमेव भवेत् इति दृढसङ्कल्पः तेन कृतः।

कृतसङ्कल्पः पुरुषोत्तमः केषुचित् दिनेषु एव काञ्चीराज्ये आक्रमणमकरोत्। परन्तु काञ्चीराज्यमपि तत्तुल्यं राज्यम्। तस्मिन् युद्धे गङ्गसेनायाः अतीव सरलतया पराजयः अभवत्।

युद्धे पराजिते सत्यपि पुरुषोत्तमः हतोत्साहः नाभवत्। अस्मिन् समये द्विगुणितोत्साहेन अधिकं सैन्यं संहृत्य तेन युद्धस्य सज्जता कृता।

एतावता सामर्थ्येन तेन आक्रमणं कृतं यत् तस्य वेगं काञ्चीराजा रोद्धुं न शक्तवान्। परिणामतः सः पराजितः जातः।

यदा काञ्चीराजा पराजितः तदा अवमाननस्य भावनया प्रेरितः सः राजकन्यां कारावासे क्षिप्तवान्।

इदानीं वशीकृतया तया सह विवाहे न काचित् बाधा आसीत्। अतः पुरुषोत्तमः निश्चयेन तया सह विवाहं कुर्यात् इति जनाः अचिन्तयन्। परं पुरुषोत्तमः तु इतोऽपि अपमानाग्नौ ज्वलन् आसीत्। तया राजकन्यया सह विवाहं कर्तुं तस्य इच्छापि नासीत्। अतः सः तां पूर्णतया दुर्लक्षितवान्। पुनरपि तस्याः मुखमपि न दृष्टवान्। स्वस्य अपमनस्य प्रतिशोधार्थं सः तस्याः विवाहं वास्तविकेन सम्मर्जनसेवकेन सह कर्तुम् ऐच्छत्। सः मन्त्रिणम् आज्ञापयत् केनचित् सम्मार्जकसेवकेन सह अस्याः विवाहं कुर्वन्तु।

क्रोधावस्थायां दत्तः राजादेशः पालनीयः अथवा न अस्मिन् द्वन्द्वे मन्त्री आपतितः। परं मन्त्री अतीव बुद्धिमान् आसीत्। सोऽचिन्तयत् – अस्मिन् विषये त्वरा हानिमुत्पादयेत्। अतः चिन्तनमेव श्रेयस्करम्। एवं विचिन्त्य 'तथास्तु' इति उक्त्वा मन्त्री ततः निर्गतः। तदारभ्य अस्याः कन्यायाः विवाहः केन सह वा कर्तव्यः इति चिन्ता तमबाधत। कामपि योजनां मनसि निधाय




सः राजकन्यायाः एकान्तस्थाने गुप्तरूपेण सर्वां सुव्यवस्थामकरोत्। पुरुषोत्तमः अनन्तरं तां कन्यां विस्मृतवान् एव। न कदापि सः तस्याः विषये मन्त्रिणं पृष्टवानपि। कालान्तरेण काञ्चीराजस्य क्रोधोऽपि शान्तः। मिथ्याभिमानेन तेन पुरुषोत्तमस्य यः अपमानः कृतः तस्य पश्चात्तापे सः दग्धः जातः।अविचारेण वर्तनं कृतवानहम् इति विचारः वरं वरं अस्पृशत् तस्य मनः।

केषाञ्चन दिनानामनन्तरं जगन्नाथपुर्याम् वार्षिकः उत्सवः आरब्धः। यथारीति पुरुषोत्तमः जगन्नाथस्य सेवाकार्ये मग्नः अभवत्। अर्चकः राज्ञः हस्ते सुवर्णस्य सम्मार्जनीं दत्तवान्। अतीव भक्त्या सः भगवतः चरणसमीपे सम्मार्जनमारब्धवान्।

तस्मिन् समये एव नियोजनानुसारं मन्त्री तत्रागच्छत्। राज्ञः पुरतः हस्तौ समानीय अतिष्ठत्। तस्य पृष्ठतः एव षोडश-शृङ्गारैः सुशोभिता एका स्वर्गीय-सुन्दरी हस्तयोः जयमालां धृत्वा तत्रागच्छत्।मन्त्री अवदत्, ''देव, क्षमां याचे। राजाज्ञापूर्तेः समयः प्राप्तः। अनया राजकन्यया प्रतिज्ञा कृतास्ति - भगवतः जगन्नाथस्य चरणयोः धूलिं सम्मार्जयता, सेवाकार्यं कुर्वता युवकेन सहैव विवाहं करिष्ये इति। सर्वत्र अन्विष्यन् अहं श्रान्तः परं तादृशः वरः न लब्धः। अतः एतां कन्यां तस्याः स्वामिनः हस्तयोः समर्पयामि'' एवमुक्त्वा मन्त्री पृष्ठतः अगच्छत्। तदा काञ्चीराजकन्या अतीव श्रद्धया तां जयमालां पुरुषोत्तमस्य कण्ठे अधारयत्। अकस्मात् मन्दिर-मण्डपात् पुष्पवृष्टिः जाता। जनैः च करताडनेन अनुरूपयोः वधूवरयोः मीलनप्रीत्यर्थम् अनुरोधः प्रकटीकृतः।

पुरुषोत्तमः अपि भगवतः महिमा एषः एवं विचिन्त्य विवाहार्थम् अनुकूलः अभवत् । अपि च सः अधुना स्वस्य दोषम् अवगतवान्। काञ्चीराजकन्यायाः कृतायाः अवधीरणाविषये खेदम् अनुभवन् सः तस्याः क्षमां प्रार्थयत्। सापि उदारमनसा सर्वमपि एतद् विधिलिखितम् अमन्यत क्षमां च अकरोत्। काञ्चीराजापि तदा एव कारावासात् मुक्तः अभवत्। अनन्तरं पुरुषोत्तमस्य काञ्चीराजकन्यायाः च विवाहः अतीवोत्साहेन सम्पन्नोऽभवत्। अनेन विवाहेन राजा तथा सर्वे प्रजाजनाः अपि आनन्दिताः। मन्त्रिणः बुद्धिचातुर्यस्य प्रशंसा गृहे गृहे जाता। मन्त्रिणः चातुर्येण अनवस्थाप्रसङ्गः परिहृतः। सर्वं राजकुलं तस्यविषये कृतज्ञताम् अन्वभवत्। अचिरादेव मन्त्रीमहोदयः अमात्यानां धुरि प्रतिष्ठापितः।





# एकस्य वैद्यस्य व्यवहारचातुर्यम्

आसीत् आनन्दगिरि: नाम लघुग्राम: पश्चिमविभागे। य: अतीव मनोहारिण्या निसर्गशोभया युक्त: आसीत्। पर्यावरणस्य वरदहस्तेनैव अयम् ग्राम: भाजनम् अवर्तत दुर्लभानाम् औषधीनाम् मूलानाम् च। चन्द्रकान्त: नाम कश्चन वैद्य: इदं स्थानम् तस्य वैद्यकीयस्य चिकित्साकार्यस्य कृते उचितम् अमन्यत। चिकित्सिते दुर्धरे व्याधौ स: तत्र अतीव सुविख्यात: अभवत्। बहव: जना: चिकित्सायै तम् द्रष्टुं दूरात् आगच्छन्ति स्म।

वैद्य: भवितुम् इच्छन्, कश्चन युवा अभिराम: नाम स्व्यकरोत् तस्य शिष्यत्वम्। भविष्यत्काले वैद्य: भवामि इति आशया युवा अभिराम: तस्य शिष्य: अभवत्।

एकदा प्रात:काले भूधारक: वेमवर्मा तेन मेलितुम् आगच्छत्। वेमवर्मा चन्द्रकान्ताय निजाऽनारोग्यविषये स्पष्टम् अगदत्। वेमवर्मण: जीर्ण: त्वग्विकार: आसीत्। यावत्पर्यन्तं तस्य त्वग्रोग: नियन्त्रणे आसीत् तावत्पर्यन्तं स: तस्मिन् विषये नाधिकम् अचिन्तयत्। किन्तु एषु दिनेषु रोग: सर्वत्र प्रथित: जायमान: आसीत्। त्वग्विकारेणैव तस्य अन्या: समस्या: अपि आरभन्त: वैद्यस्य चिकित्साया: ऋते न अन्य: कश्चन उपाय: तस्य सविधे अविद्यत।

चन्द्रकान्तेन वेमशर्मण: त्वग् सम्यक् परीक्षिता स: तस्मै लेपनार्थम् वनस्पते: अर्कमेकम् अयच्छत् अवदत् च, वेमवर्मन् महोदय, "भवत: कृते अन्या: काश्चन औषध्य: आवश्यक्य:, किन्तु ता: मम सकाशे न विद्यन्ते। भवत: औषधनिर्माणे या: वनस्पतय: प्रयुज्यन्ते ता: अत्र नोपलभन्ते।

साखामुरी श्रीनिवास



ताः औषध्यः मणिकान्तनामकस्य वैद्यस्य समीपे उपलब्धाः यः निलगिरिपर्वते उदकमण्डले निवसति।''

अयम् रोगः कष्टसाध्यः, समूलनिर्मूलनार्थम् अधिकः कालः अपेक्षते। वेमवर्मा सहसा अवदत्, ''यत्र कुत्रापि ताः औषध्यः उपलभ्यन्ते ततः अहम् ताः आनयेयम्, कृपया मां योग्यं निर्दिशतु''।

चन्द्रकान्तः औषधस्यविषये वृक्षस्य एकस्मिन् पर्णे सविस्तरम् विलिख्य वेमवर्मणे अयच्छत्। वेमवर्मा तत् स्वीकृत्य तस्मै मानधनम्। चिकित्साशुल्कं दातुं प्रायतत। चन्द्रकान्तः प्रत्यवदत्, ''भवान् अस्माकम् ग्रामस्य ललामभूतः पुरुषः, मम चिकित्सालयं प्रति भवतः आगमनं मम आनन्दाय कल्पते। एतदेव पर्याप्तं मम कृते। भवतः ऋणे एव आनन्दम् अनुभवामि। चन्द्रकान्तः चिकित्सायाः शुल्कम् स्वीकर्तुम् नान्वमन्यत।

आनन्दितः वेमवर्मा चन्द्रकान्तस्य स्कन्धं स्पृष्ट्वा तस्य प्रशंसाम् अकरोत् । सः अनन्तरं तस्य गृहं प्रतिनिवृत्तः।

तस्याम् एव सन्ध्यायाम् उदरवेदनया त्रस्तः सञ्जीवः नाम कृषीवलः चिकित्सालयम् आगच्छत्। सः उदरे हस्तं स्थापयित्वा एव अतिष्ठत्, वेदनां चानुभवन् आसीत्। चन्द्रकान्तः अनुक्षणम् सञ्जीवम् काष्ठोत्पीठिकायां शाययित्वा तस्य उदरे औषधम् अलेपयत्। सः अभिरामं महापर्णकाथम् सिद्धम् कर्तुम् अकथयत्। सः सञ्जीवाय काथं दत्त्वा पातुम् आदिशत्। सञ्जीवः अतीव अल्पकाले उल्लाघः अभवत्। तस्य वेदना न्यूना जाता। सः एकस्यां घण्टायां पूर्ववत् अभवत्।

''भवतः उदरवेदना समूलं नष्टा, पुनः भवन्तं पीडयितुम् धैर्य न दर्शयेत्''। यदि भविष्यत्काले एतादृशं कष्टम् उद्भवेत् तर्हि निःशङ्कं पुनः आगच्छतु'' इति अवदत् चन्द्रकान्तः सञ्जीवम्। सञ्जीवः आदरेण चन्द्रकान्तं नमस्कृत्य स्वस्य कोषात् किञ्चित् धनं निष्कास्य तस्मै अयच्छत्। चन्द्रकान्तः मुदैव धनं स्वीकृत्य सञ्जीवं पुनः प्रैषयत्।

अभिरामः द्वयोः घटनयोः विरोधम् अपश्यत्।

''धनिकाय नि:शुल्कम् औषधं, निर्धनाय च सशुल्कम् औषधदानम् इत्येतयो: कारणं स: नावगच्छत्।

यावत् वा स: चिन्तयति स: तस्य गुरो: मन: वाचयितुं नाशक्नोत्। स: रात्रावपि निद्रातुं समर्थ: नासीत्। स: अचिन्तयत्,' यावत्पर्यन्तं शङ्काया: उत्तरं नास्ति तावत्पर्यन्तं शान्ति: नास्ति। स: चन्द्रकान्तम् अपृच्छत्,''गुरुदेव ह्य: आरभ्य कश्चन विचार: मम मनसि कष्टं जनयति''। किं तत्-विषये अहं भवन्तं प्रष्टुम् शक्नोमि?''

चन्द्रकान्त: सस्मितं प्रत्यवदत्, ''निश्चितमेव, भवान् प्रष्टुं शक्नोति, शिष्यस्य शङ्काया: निरसनम् गुरो: एव दायित्वम्। पृच्छ माम् ''। चन्द्रकान्त: ससंयमम् अभिरामस्य शङ्कां श्रुत्वा अवदत्, ''बेमवर्मण: औषधं न विद्यते अस्मत्समीपे, यदि वयम् तस्मात् धनं स्वीकरिष्याम: तर्हि स: चिन्तयेत् अस्माभि: औषधम् अदत्त्वा एव केवलम् धनम् कृतम्, अत एव मया धनं न स्वीकृतम्। अभिराम: अपृच्छत्,''निर्धनात् सञ्जीवात् धनस्वीकार: कियान् योग्य:?

सञ्जीव: श्रमजीवी। यदि तस्य धनं न स्वीकरिष्याम: तर्हि स: न्यूनगण्डम् अनुभवेत्। स: किमपि कदापि विनामूल्यं न स्वीकरोति। न केवलं सञ्जीव: अपि तु अनके अत्रत्या जना: स्वयंमानिन:। अत एव अहं तेन दत्तं यावत् वा धनम् आददाम् तस्मै च तत: अधिकानि मर्हार्हाणि औषधानि अयच्छम्। यदि वयं एषां जनानाम् आरोग्यार्थं साहाय्यं कर्तुम् इच्छेम तर्हि तै: सह व्यवहारसमये अस्माभि: चतुरै: भाव्यम्।

अभिराम: गुरो: चातुर्येण चकित: अभवत्। स: गुरो: औषधविज्ञानम् अधीतवान् एव किन्तु तेनैव सह व्यवहारचतुर्यस्यापि अनुभवम् अवाप्नोत्।





# महामल्लः पलायितः

**पुरा** कदाचित् जापानदेशे सम्भावतीनगर्यां सम्बलः नाम राजा प्रशास्ति स्म। तस्य राज्ये बहवः शूराः मल्लाः निबसन्ति स्म।

अथैकदा 'महामल्लः' नाम कश्चन वीरः मल्लयोद्धा सम्बलराजस्य प्रासादं प्राप्तः। देशान्तरम् अटन् महामल्लः बहून् मल्लान् पराजितवान् आसीत्। सः सर्वत्र उद्घोषयन् एव आसीत् यत्, 'वर्तते बा कोऽपि अस्मिन् जगति यः मां पराजेतुं शक्नुयात्?' इति।

महामल्लः सम्बलराजं प्रति गत्वा अब्रवीत्, ''महाराज, अस्ति किं भवतः राज्ये कोऽपि मल्लयोद्धा यः मया सह योद्धुं समर्थः? यद्यस्ति चेत् बरम्। यदि नास्ति चेत् मां 'विजयी' इति उद्घोष्य मयि कृपां प्रदर्शयतु'' इति।

तस्य एतानि गर्वयुतानि वचनानि श्रुत्वा प्रजाजनाः तु चकितचकिताः जाताः। प्रत्युत्तरदाने तस्मै किं वक्तव्यमिति चिन्तयन्तः आसन् सर्वे। झटिति एब मन्त्रीवर्यः उत्थाय वक्तुमारभत, ''महाराज, नैषः चिन्ताविषयः। अस्माकं राज्ये चण्डप्रचण्डौ नामकौ मल्लौ बर्तेते। तयोः सादृशः बलवान् मल्लः विद्यते बा कोऽपि? अधुना तु स्वगृहं गतवन्तौ। तौ परश्वः प्रत्यागमिष्यतः। तदा एतस्य मल्लस्य आहवानाय उत्तरं दद्यातां तौ'' इति।

शीघ्रमेव राज्ञा तस्य महामल्लस्य कृते निबासव्यबस्था खानपानादीव्यवस्था च सुविहिता। महामल्लः निवासस्थानं गत्वा मन्त्रिणः वचनेषु गभीरं चिन्तनं कर्तुम् आरब्धवान्। तस्य मनः किञ्चित् विचलितम्। तस्य कृते विशेषतया नियुक्तान् सेवकान् चण्डप्रचण्डयोः विषये अधिकं

बी. लक्ष्मी नारायण

ज्ञातुं सः प्रश्नान् पृष्टवान्।

तस्य प्रश्नान् श्रुत्वा सेवकैः उक्तं, "चण्डप्रचण्डौ तु अस्माकं राज्यस्थितानां सर्वेषां मल्लानां प्रशिक्षकौ स्तः। तौ सर्वदा योगसाधनायां मग्नौ भवतः। यदा राज्ये किमपि सङ्कटम् आपतति तदा तौ प्रकटितौ भवतः" इति।

द्वितीये अहनि महामल्लस्य निवासस्थानसमीपे एव बृहद्भवनस्य निर्माणकार्यम् आरब्धम्। तत्पुरतः च एकं महासिंहद्वारं निर्मितम्। तत् दृष्ट्वा आश्चर्येण महामल्लः पृष्टवान्, "किमेतत्?" इति। सेवकैः उत्तरितम्, "अस्माकं प्रसिद्धौ चण्डप्रचण्डौ अधुना अत्र प्राप्स्यतः। तौ न सामान्यमनुष्यौ। सामान्यद्वारं तयोः कृते पर्याप्तं न भवति। अतः एतादृशं महाद्वारं तयोः कृते अस्माभिः निर्मितम्।"

गृहं रचयन् लेपकारः कर्मकरान् उक्तवान्, "रे मित्राणि, प्रयत्नपूर्वकं गृहभूमिः सुबद्धा सुदृढा च भवतु। यतो हि यदा अस्माकं मल्लौ अत्र पदं न्यस्यतः तदा कदाचित् भूस्खलनस्य भयं वर्तते।" एवमुक्त्वा सर्वानपि कर्मकरान् प्राचोदयत् सः।

एवं सर्वविधां सिद्धताम् अवलोक्य तस्य मनसि भीतिः उत्पन्ना। नगरे सर्वत्र सण्डिण्डिमघोषणा अपि जाता यत् 'श्वः चण्डप्रचण्डयोः मल्लयोः आगमनं भवेत्' इति।

तच्छ्रुत्वा अपरस्मिन् दिवसे अष्टाविंशति-अश्वैः कर्ष्यमाणः कश्चन रथः तत्र सिंहद्वारे आनीय स्थापितः। चण्डप्रचण्डयोः कृते जायमानेन जयजयध्वनिना नभः आक्रान्तम्। तयोः स्वागतार्थं स्वयं महाराजः अपि तत्र उपस्थितः।

महामल्लेन सह चण्डप्रचण्डयोः परिचयं कारयितुं राजमन्त्री महामल्लस्य निवासस्थानं प्राप्तः। किन्तु महामल्लः तत्र तिष्ठेत् किम्? तत् निवासस्थानं तु रिक्तमासीत्। नैकविधानां पारितोषिकाणां पदवीनां च भारं मस्तके वहन् महामल्लः पूर्वमेव ततः पलायितः।





# गुणवती गिरिजव्वा

आसीत्पुरा मैसुरप्रान्ते निजगल्लुनामकं किञ्चन लघुराज्यम्। राजा रामस्सः तद्राराज्यम् अधिशास्ति स्म। शूरः प्रजावत्सलः च सः नृपः। लकुमव्वा तस्य राज्ञी।

सः राजा सर्वप्रकारकेण वैभवेन विराजते स्म। अपारम् ऐश्वर्यं भुञ्जानोऽपि सः एकां न्यूनताम् अनुभवति स्म। तस्य विवाहोत्तरम् अतीतेषु दशवर्षेष्वपि तेन अपत्यरत्नं न प्राप्तम्। अपत्यार्थं तप्यमानः सः देवताः आर्चत्, तीर्थानि पर्याटत्। परं तेन इष्टं फलं न लब्धम्।

लकुमव्वापि सदैव अपत्यचिन्ताचक्रम् आरुह्य तिष्ठति स्म। राज्यस्य उत्तराधिकारी तु अत्यावश्यकः। राज्यं शासितुं युवराजे असति तद् अराजकं भवेत्। अतः चिन्ताक्रान्ता सा। भृशमपि विमृश्य सा कञ्चन उपायम् अचिन्तयत्। सा आत्मनः एकां सम्बधिनीं नगरान्तरात् आहूय सखीरूपेण तस्याः वासं स्वप्रासादे एव अकल्पयत्। तस्याः सखी परमसुन्दरी गुणवती चासीत्। तस्याः नाम गिरिजव्वा। तस्याः तत्र आनयने आसीत् किमपि महदुद्दिष्टं लकुमव्वायाः

राज्ञी लकुमव्वा नृपाय गिरिजव्वायाः गुणान् अकथयत् तां भूरि प्राशंसच्च। सा राजानं प्रार्थयत, ''आर्यपुत्र, भवान् गिरिजव्वां परिणयतु'' इति। राजा तत्सर्वथा नान्वमन्यत। परं गिरिजव्वया आग्रहपूर्वकं कृतायां प्रार्थनायां सः गिरिजव्वां विवोढुं सिद्धः अभवत्।

राज्ञः गिरिजव्वया सह परिणये जाते

जी. भक्ष्यराम

लकुमव्वाया: सङ्कल्प: अंशत: सिद्धिं गत:। परं विबाहानन्तरं गिरिजव्वाया: माता राजश्वश्रूरूपेण माहात्म्यं सम्पादयितुं प्रयत्नम् आरभत। सा राज्ञीपदम् आरूढवतीं स्वकन्यां तस्य पदस्य स्वार्थसिद्ध्यर्थं उपयोगं कर्तुम् उपादिशत्। ''वन्ध्याया: लकुमव्वाया: अपेक्षया राजा त्वय्येव अधिकम् अनुरक्त: अस्ति। अत: त्वं तं स्वमुष्टिगतं कृत्वा स्वार्थं साधय। सपत्नी लकुमव्वा यथा अधिकाराच्च्युता भवेत् तथा कुरु'' इति वदति स्म गिरिजव्वाया: माता।




दुस्सङ्गेनापि सज्जना: स्वस्वभावं न मुञ्चन्ति तद्वदेव मातु: दुरुपदेशेनापि गिरिजव्वा दुराचरणं नाश्रयत्। लकुमव्वाया: कारणादेव सा राज्ञीपदं प्राप्नोत्। अत: सा आत्मानं लकुमव्वया अनुगृहीतां मत्वा कृतज्ञतां प्रकटीकरोति स्म। गिरिजव्वा लकुमव्वां न कदापि तिरस्कृतवती। सर्वदा च तया सह आदरेण ज्येष्ठभावेन व्यवहरति स्म।

वर्षद्वयानन्तरं सौभाग्येन गिरिजव्वा पुत्रम् असूत। राज्ये सर्वत्र मोदलहर्य: प्रसृता:। लकुमव्वा तु वर्णनातीतम् आनन्दम् अन्वभवत्। तस्या: स्वप्न: एव सत्यतां गत: आसीत्। सर्वे सहर्षम् उत्सवम् आचरन्।

कस्तुरीनायक: नाम गिरिजव्वाया: अनुज:। दुष्ट: चासौ महामूर्खोऽपि आसीत्। सर्वदैव स: दुर्जनान् सेवते स्म। यदा गिरिजव्वाया: राज्ञा सह विवाहोऽभवत् तदा आरभ्य स: राजप्रासादे निवसति स्म। राज्ञ्या: गिरिजव्वाया: भ्राता राजश्याल: स: राजास्थाने उच्चपदम् अधिकारान् च प्राप्नोत्। स: अधिकारस्य दुरुपयोगमपि अकरोत्।

अथ कदाचित् अकस्मादेव शत्रुसैन्यं साक्षात् राजप्रासादं प्राविशत्। क: अस्य आक्रमणस्य कारक:? कस्तुरीनायक: एव! स: शत्रुभि: सह रह: मन्त्रं कृत्वा स्वावुत्तं रामस्सनायकं सिंहासनात् च्यावयित्वा स्वयमेव निजगल्लराजपदम् आरोढुम् ऐच्छत्। राजद्रोहिणि सत्यपि स: बाह्यत: राज्ञा सह सौहार्देन व्यवहरति स्म। कस्तुरीनायके विश्वस्य राजा तं सेनापतित्वेन न्ययोजयत्।

लकुमव्वायाः सङ्कल्पः अंशतः सिद्धिं गतः। परं विवाहानन्तरं गिरिजव्वायाः माता राजश्वश्रूरूपेण माहात्म्यं सम्पादयितुं प्रयत्नम् आरभत। सा राज्ञीपदम् आरूढवतीं स्वकन्यां तस्य पदस्य स्वार्थसिद्ध्यर्थं उपयोगं कर्तुम् उपादिशत्। "वन्ध्यायाः लकुमव्वायाः अपेक्षया राजा त्वय्येव अधिकम् अनुरक्तः अस्ति। अतः त्वं तं स्वमुष्टिगतं कृत्वा स्वार्थं साधय। सपत्नी लकुमव्वा यथा अधिकाराच्च्युता भवेत् तथा कुरु" इति वदति स्म गिरिजव्वायाः माता।

दुस्सङ्गेनापि सज्जनाः स्वस्वभावं न मुञ्चन्ति तद्वदेव मातुः दुरुपदेशेनापि गिरिजव्वा दुराचरणं नाश्रयत्। लकुमव्वायाः कारणादेव सा राज्ञीपदं प्राप्नोत्। अतः सा आत्मानं लकुमव्वया अनुगृहीतां मत्वा कृतज्ञतां प्रकटीकरोति स्म। गिरिजव्वा लकुमव्वां न कदापि तिरस्कृतवती। सर्वदा च तया सह आदरेण ज्येष्ठभावेन व्यवहरति स्म।

वर्षद्वयानन्तरं सौभाग्येन गिरिजव्वा पुत्रम् असूत। राज्ये सर्वत्र मोदलहर्यः प्रसृताः। लकुमव्वा तु वर्णनातीतम् आनन्दम् अन्वभवत्। तस्याः स्वप्नः एव सत्यतां गतः आसीत्। सर्वे सहर्षम् उत्सवम् आचरन्।

कस्तुरीनायकः नाम गिरिजव्वायाः अनुजः। दुष्टः चासौ महामूर्खोऽपि आसीत्। सर्वदैव सः दुर्जनान् सेवते स्म। यदा गिरिजव्वायाः




राज्ञा सह विवाहोऽभवत् तदा आरभ्य सः राजप्रासादे निवसति स्म। राज्ञ्याः गिरिजव्वायाः भ्राता राजश्यालः सः राजास्थाने उच्चपदम् अधिकारान् च प्राप्नोत्। सः अधिकारस्य दुरुपयोगमपि अकरोत्।

अथ कदाचित् अकस्मादेव शत्रुसैन्यं साक्षात् राजप्रासादं प्राविशत्। कः अस्य आक्रमणस्य कारकः? कस्तुरीनायकः एव! सः शत्रुभिः सह रहः मन्त्रं कृत्वा स्वावुत्तं रामस्सनायकं सिंहासनात् च्यावयित्वा स्वयमेव निजगल्लराजपदम् आरोढुम् ऐच्छत्। राजद्रोहिणि सत्यपि सः बाह्यतः राज्ञा सह सौहार्देन व्यवहरति स्म। कस्तुरीनायके विश्वस्य राजा तं सेनापतित्वेन न्ययोजयत्।




सेनापतिपदं प्राप्य कस्तुरीनायक: तु तस्य ईप्सितं साधयितुम् उत्तमम् अवसरम् आप्नोत्। स: प्रतिवेशिराजभि: सह कुमन्त्रणाम् आरभत। 'अमुकदिवसे रात्रौ निजगल्लुराज्यम् अभिधावत। अहं दुर्गस्य महाद्वारम् उद्घाटयामि' इति सन्देशं स: तान् प्रति अप्रेषयत्।

कस्तुरीनायकस्य मन्त्रणानुगुणं शत्रुसैन्यं रात्रौ अकस्मात् निजगल्लुदुर्गं प्राविशत्। विश्वासघाती कस्तुरीनायक: शत्रो: सम्मुखीकरणम् अनाटयत्। परं तस्य दाम्भिकस्य कपटाचरणं अचिरादेव प्रकटतां गतम्। दुर्दैवात् तस्मिन् युद्धे राजा रामस्सनायक: वीरमरणं प्राप्नोत्। निजगल्लुराज्यं शत्रो: हस्तसात् जातम्।

यदा कस्तुरीनायक: शत्रुसेनापतिं निजगल्लुराजपदम् अयाचत तदा स: सेनापति: गिरिजव्वाया: सौन्दर्येण आकृष्ट: सन् कञ्चन समयम् अवदत्। तत्समयानुगुणं 'यदि गिरिजव्वा तं परिणेष्यति तर्हि तेन परिणयेन जनिष्यमाणं पुत्रं स: राजपदे नियोजयित्वा कस्तुरीनायकं राजप्रतिनिधिरूपेण योजयिष्यति, इति सेनापति: अवदत्।

उपायान्तरम् अदृष्ट्वा कस्तुरीनायक: एनमपि समयम् अन्वमन्यत। गिरिजव्वाया: अनुमत्यर्थम् उभावपि तस्या: प्रासादं गतौ। सेनापति: स्वोद्देशम् उक्त्वा सपद्येव उत्तरदानम् ऐच्छत्। गिरिजव्वा अवदत्, ''मम भ्राता एनं विवाहम् अनुमन्यते चेन्नास्ति मम कोऽपि आक्षेप:'' इति।

कस्तुरीनायकस्तु न लेशमात्रमपि सङ्कोचम् अन्वभवत्। स: नीचवृत्ति: अनुक्षणम् अब्रवीत्, ''मम तु पूर्वमेव अनुमति: अस्ति। अन्यथा उपायान्तरं न पश्यामि'' इति। पतिव्रता गिरिजव्वा कथं शत्रुणा सह विवाहप्रस्तावम् अनुमतवती इति सर्वेषाम् आश्चर्यम्।

तदा गिरिजव्वा काञ्चन इच्छां प्रकटीकृतवती। सा अवदत्, ''अस्माकं कुलपराम्परानुगुणं विवाहात् पूर्वं मया मम भ्रात्रा च शोभायात्रायां भागम् ऊढ्वा नगरपरिक्रमा कर्तव्या'' इति। एनां विचित्राम् इच्छां श्रुत्वा सर्वेऽपि आश्चर्यम् अन्वभवन्। तथापि शत्रुसेनापति: गिरिजव्वाया: इच्छानुगुणं शोभायात्राया: सिद्धताम् आरभत।

एतत्सर्वं ज्ञात्वा 'सेनापतिं मा परिणय' इति सूचयितुं लकुमव्वा गिरिजव्वायाः प्रासादम् अगच्छत्। परं गिरिजव्वा तस्याः सूचनां न अङ्गीकृतवती। लकुमव्वायाः अनादरार्थं वा अपमाननार्थं वा तया तत्सूचनायाः अनङ्गीकारः कृतः इति तु सर्वथा वितथमेव। मनसि किमपि महदुद्दिष्टं निधाय गिरिजव्वया तथा विधत्तम्। परन्तु कः अपि तस्याः वास्तविकम् उद्दिष्टं नावगतवान्। शोभायात्रायाः समये स्वपुत्रं लकुमव्वायै समर्प्य,''भगिनि, अद्य प्रभृति तवैव एषः पुत्रः'' इति उक्त्वा सा निरगच्छत्।

वैभवशालि शोभायात्राद्वयं नगरपरिक्रमार्थं प्रस्थितम्। एकस्यां गिरिजव्वा अपरस्याञ्च कस्तुरीनायकः भागम् अवहताम्। द्वे अपि शोभायात्रे नगरमध्यस्थायाः उन्नतायाः पर्वतिकायाः शिखरम् आगते। तत्र गिरिजव्वा स्वानुजस्य नीराजनम् अकरोत् अवदच्च,''तवैव कृपया अहं महत्पदम् आसादितवती''। तस्याः वचनं सत्यं मत्वा कस्तुरीनायकः हृष्टः सञ्जातः।

अनुक्षणं गिरिजव्वा क्रोधेन सन्तप्ता अभवत्। रौद्ररूपं धृत्वा सा अभणत्, ''राज्यद्रोहिन्, मम कारणात् मया सह प्रासादं प्रविष्टवतः तव कारणाच्च रामस्सनायकस्य राज्यं धूलिसात् अभवत्। अनेन नीचकर्मणा अस्मद्वंशः न कदापि प्रतिष्ठां गमिष्यति। अस्मत्सदृशाः महापापिनः मातृभूमेः कृते भारभूताः एव'' इति वदन्ती सा भ्रातरं परिष्वज्य तेन सहैव पर्वतशिखरात् अकूर्दत्। ततः अधः पतितौ तौ अनुक्षणं मरणं प्राप्नुताम्।

गुणवत्या पूज्यया गिरिजव्वया यत्र आत्मबलिदानं कृतं तत्र कश्चन ग्रामः आवासितः योऽद्यापि विद्यते तत्स्थाने। धन्या सा गिरिजव्वा या स्वकुलस्य मानरक्षणार्थं स्वप्राणान् अपि त्यक्तवती!






# इदं श्मश्रु मदीयम्

एकदा कस्मिंश्चित् ग्रामे लाडमल: हजारीमल: च एते मित्रे आस्ताम्। द्वावपि महान्तौ वणिजौ आस्ताम्। द्वाभ्यामपि बहु धनम् अर्जितम् आसीत्। परन्तु हजारीमल: किञ्चित् व्ययस्वभावी आसीत् । लाडमल: तु अधिकं लोभी आसीत्। हजारीमल: सर्वथा अस्वस्थ: भवति स्म। लाडमलेन च स्वस्य केशा: श्मश्रु च वर्धिते आस्ताम्।

एकस्मिन् दिने द्वावपि हास्यविनोदे यदा मग्नौ आस्ताम् तदा हजारीमल: अवदत्, ''लाडमल! अद्य यावत् मया कदापि न कथितम् परं तव श्मश्रु बहु मनोरमं दृश्यते, अद्यपर्यन्तं तु मया अगणितानि श्मश्रूणि दृष्टानि, परं तवादृशी श्मश्रु सम्पूर्णे देशे एकस्यापि न भवेत्'' इति। एतच्छ्रुत्वा लाडमल: गर्वेण अवदत्, ''सत्यं वदसि त्वं हजारीमल, सर्वेऽपि एवमेव कथयन्ति, न एतावदेव बहूनां तु श्मश्रु इदं क्रेतुमपि इच्छा आसीत्'' इति।

तस्य तत् वच: श्रुत्वा एव हजारीमल: अत्यन्तेन कुतूहलेन अपृच्छत्-''के ते जना:? ते किमर्थं भो:! अहमेव क्रेष्यामि, वद किं मूल्यं ग्रहीष्यते त्वया?''

धनलोभेन सहसैव लाडमलस्य मनसि नैका: कल्पना: उत्पन्ना:। सपदि स: अवदत्, ''बाढम्! एकसहस्रं सुवर्णमुद्रा: दीयन्ताम्।''

''अथ किम्? स्वीकरोतु एकसहस्रं सुवर्णमुद्रा:। मया चिन्तितम् यत् त्वम् अस्य श्मश्रुण: कियत् वा मूल्यम् याचिष्यसे।'' इति

एन्. मुकुन्द रॉय

वदन् तेन किश्चित् धनम् तस्य हस्ते स्थापितम्।

एतत् दृष्ट्वा लाडमल: भीत: अभवत्। हजारीमल: एकं नियमं स्थापयन् अवदत्- ''बन्धो! इदानीम् आरभ्य इदं श्मश्रु मदीयम्। यावत् अहम् अस्य पूर्णं मूल्यम् तुभ्यं न दास्यामि, तावत् इदं श्मश्रु त्वत्समीपे न्यासरुपेण स्थास्यति। अतीव दक्षतया अस्य रक्षणं त्वया करणीयम्। मम अस्मिन् श्मश्रुणि मम इच्छानुसारमेव त्वया तैलं लेपनीयम् भवेत्। मम रुच्यनुसारमेव इदं कर्तनीयम् अपि।'' लाडमल: सपदि एव तं नियमम् अन्वमन्यत। झटिति बिधिमता: लिखितकर्गजा: अपि सिद्धा: कृता:। हजारीमल: पुनरपि एकवारं सूचयन् अवदत्-''पश्य, बन्धो! अधुना यदि कोऽपि इदं श्मश्रु दृष्ट्वा यदि प्रशंसां करिष्यति तर्हि त्वया बक्तव्यम्-''बन्धो, मूल्यं दत्त्वा इदं क्रीतम् अस्ति। इत्थं त्वया व्यवहरणीयं भवेत्। ज्ञातं किल? अग्रे अस्य श्मश्रुविक्रयणस्य क: परिणाम: स्यात् इति किमपि न अजानात् स: अत:''

''साधु।'' इति लाडमलेन कथितम्।

द्वितीय दिनात् आरभ्य कदापि अकस्मात् असमये लाडमलस्य समीपं हजारीमल: आगच्छति स्म। तं तथा आगच्छन्तं दृष्ट्वा लाडमल: पृच्छति स्म। ''किं कथमागतं त्वया?''




उत्तरयन् हजारीमल: वदति स्म- ''नान्यत् किमपि केवलं मदीयं श्मश्रु कथमस्ति तद्द्रष्टुमेव आगतोऽस्मि।'' कदाचित् कुप्यन्, अस्वस्थ: सन् आगत्य वदति स्म-''किमिदम् बन्धो! मम श्मश्रु नष्टं भवदस्ति, लोलयत् इदं श्मश्रु नारिकेल-तैललेपनेन त्वं कथम् अकरो:? कङ्कतेन रचनाऽपि कथश्चिदेव कृता अस्ति, यद् असभ्यं दृश्यते खलु!'' एवं तर्जयन्तं कोलाहलं च कुर्वन्तं तं दृष्ट्वा लाडमल: अस्वस्थ: भवति स्म। अधुना तयो: सौहृदे बाधा आगता। मैत्रीं रक्षितुं काठिन्यम् अनुभूतं लाडमलेन। द्वयो: मनसो: सन्दिग्धता आरब्धा। ''बन्धो! त्वया अहम् उपकृत: भवेयम्। कथश्चित् लालसया मया अविचारेण तव नियम: मत:,

परम् अधुना इदं मे श्मश्रु मह्यं दीयताम् त्वन्मूल्यञ्च पुनर्गृह्यताम्'' एवं वदन् लाडमल: दयेच्छयालुण्ठितुम् आरभत।

किन्तु हजारीमल: तन्नामन्यत। इदं दृष्ट्वा लाडमल: अवदत्-''अस्तु! यदि त्वं न मन्यसे तर्हि यावत्त्वया मूल्यं दत्तमस्ति तत: द्विगुणितं स्वीकुरु! तथापि हजारीमल: न सहमतिं प्रादर्शयत्। एतत् दृष्ट्वा कथञ्चित् हजारीमलात् स्वात्मानं मोचयितुं लाडमल: चतुस्सहस्रं मुद्रा: दातुं सिद्धोऽभवत्। 'पश्यामि कियत् वर्धयिष्यति एष:' इति चिन्तयन् हजारीमल: अनुत्तरित: एव अतिष्ठत्।

लाडमल: असहाय्य: एव चिन्तयन् अतिष्ठत्। एकस्यां रात्रौ हजारीमल: स्वभावानुगुणम् आगत्य गाढं स्वपत: लाडमलस्य श्मश्रु बलेन अकर्षत्। अहो आश्चर्यम्! सकलमपि श्मश्रु तस्य हस्ते आगतम्।

लाडमल: सपदि भीत्या उत्थाय आक्रोशन् न्यायवादिन: समीपं गत:। चतुरेण न्यायवादिना द्वयोरपि पक्षं श्रुत्वा एवं निर्णीतम्-

''श्मश्रु मया क्रीतम्, अत: अस्मिन् अधिकार: मदीय:' एवं मिषेण हजारीमलेन स्वमित्रं पीडितम्। तथा च इमं त्रासम् असहमानेन लाडमलेन कृत्रिमं श्मश्रु लिप्तम् इति सिद्धमेव।'

अत: हजारीमल: असमयं गत्वा यद् श्मश्रु बलेन अकर्षत् तद् स: पुन: नयेत् लाडमलाय श्मश्रुण: यन्मूल्यं दातव्यमस्ति तत् तदर्थं कृतेन व्ययेन सह सपदि दद्यात्! सर्वेऽपि जना: न्यायाधीशस्य न्यायपद्धतिं प्रशंसन्त: गृहम् अगच्छन्।हजारीमलेन कथं पीडित: आसीत् लाडमल: इत्यत्र ते सर्वे साक्षीभूता:आसन् अत: 'सुष्ठु पाठ: पाठित: हजारीमलाय' इत्यपि ते पुन:पुन: आनन्देन मिथ: वदन्त: गृहं ययु:।''






# सुखिनो भवन्तु

''हे पितामहि, किम् इदं सत्यं यत् त्वं ममापेक्षया चिण्टुमेव अधिकं प्रीणासि'' इति पृच्छन् चिनुः पितामहीम् आलिङ्गितवान्।

''हे चिनो, त्वम् एवं किमर्थं वदसि? यथा तव पितृव्यस्य पुत्रः चिण्टुः तथैव त्वम् अपि मम प्रियः'' इति पितामही उदतरत्।

''तर्हि तव आगमने अधुना सप्ताहः अपि नातीतः तथापि त्वं पितृव्यस्य गृहं प्रत्यागन्तुं किमर्थम् इच्छसि'' इति चिनुः पुनः अपृच्छत्।

''तव पितृव्यः ग्रामे वसति। तत्र वायुः शुद्धतरः भवति। हे प्रियचिनो, मम श्वासरोगः तस्मिन् वातावरणे न उद्भवेत्।'' इति पितामही अकथयत्।

''एवं तर्हि, कृपया उत्सवानन्तरं गच्छतु। चतुर्षु दिनेषु एव दीपावलिः अस्ति'' इति चिनुः अनुनयं कृतवान्। 'दीपावलि-उत्सवः नगरस्थः' इति धिया एव भीत्या मम हृदयस्य कम्पनानि वर्धन्ते। मम श्वासः अत्र अवरुद्धः इति भासते।'' इति उक्त्वा पितामही सत्यं कारणं प्रकाशितवती।

''हे पितामहि, एवं किमर्थं वदसि?'' ''जात, अहं जानामि यत् दीपावलिः इति बालानां प्रियः उत्सवः। यूयं बालाः बहूनि विस्फोटकानि ज्वालयितुम् इच्छथ। युष्माकं वयसि सहजमपि तत्। परं वृद्धान् तथा च मादृशान् दीर्घस्थायिरोगेण पीडितान् दीपावलिः यमदेवं भूतले एव दर्शयति'' इति पितामही अवदत्। चिनोः पूर्णं ज्ञानं नाभवत् परं तेन मनसि किमपि ऊहितम्।

पी.व्ही. शेषरत्नम्



सा पुन: अवदत्- "न केवलं मम आरोग्यं, परं गतवर्षे विलम्बितरञ्जकस्फोटकानां ज्वालनेन निर्मितेन गन्धकधूमेन अस्माकं वृद्धप्रतिवेशिन: जीवनम् एव कष्टे आसीत्।"

"हे पितामहि, परं त्वमेव अस्मभ्यं नरकासुरस्य वधविषये कथितवती। वर्षाया: अनन्तरं दुर्वातं निर्मीयमाणानां मषकाणां सङ्ख्यां निरोद्धुम् अस्मिन् उत्सवदिने रञ्जकस्फोटकानि ज्वाल्यन्ते इति मुख्यहेतुं त्वमेव अस्मभ्यम् अकथय:।"

"हे चिनो, तदपि सत्यमेव। रञ्जकस्फोटकेभ्य: गृहनिर्मात्रिभ्य: स्फुलिङ्गेभ्य: च निर्गत: गन्धकधूम: मषकाणां शत्रु: एव। अहम् अनुमन्ये। परं किं मनोरञ्जनं इति धिया उचितमर्यादाम् उल्लङ्घ्य विस्फोटकानां ज्वालनं समर्थनीयम् अस्ति? कर्णपटलस्य अपकारं कुर्यात् तथा उच्चै: ध्वनिनिर्मातॄणां स्फोटकानां ज्वालनं किमर्थम्? किमर्थं तावत् अधिकं प्रमाणं येन ध्वनिप्रदूषणं पुनश्च धूमेन वायुप्रदूषणमपि भवेत्?" इदानीं चिनु: चिन्तयितुमारब्धवान्।

"पितामहि, तव शब्दा: सत्यम् इति भासन्ते। नूतनबाल: वेणु: इत्यनेन सह स्पर्धायाम् अस्माभि: अधिकानां विस्फोटकानाम् अग्निबाणानां च ज्वालनं विहितम्। कति विस्फोटकानि ज्वालितवन्त: इति द्रष्टुं वयं मध्ये न स्थगितवन्त: एव। तं पराजेतुं इतोऽपि कति विस्फोटकानि ज्वालयाम इत्येव विचारे वयं मग्ना: आस्म।"

"परिणामत: युष्माकं पालकै: अधिकं धनं प्रतिवर्षं तदर्थं व्ययीकर्तव्यम् आपतितम्। यदि युष्माकं स्पर्धा तीव्रा भवति तर्हि ये अपघाता: भवन्ति, तेषां विषये तु न चिन्तयाम: एव। किं त्वम् अवगच्छसि यत् विस्फोटकानाम् अधिकमात्रया ज्वालनेन अन्येषां कथं पीडा भवति? एतादृश-ध्वनिप्रदूषितवायुप्रदूषित-उत्सवेषु हृदयरोगिणां श्वासविकारिणां च श्वासावरोध: कथं जायते इति कदापि त्वम् अवलोकितवान् वा?" कमलाम्मा जानाति स्म यत् तस्या: शब्दै: पौत्र: आहत: भवेत्।

"आम् मया गतवर्षे किमपि अवलोकितम्।

गतदीपावलिसमये 'लाडु:' एकवर्षीया अपि नासीत्। सा निश्चयेन भयकम्पिता आसीत्। तद्दिने सा आरात्रि रुदितवती। मम हृदयं तस्या: निमित्तं द्रवितम्'' इति चिनु: अवदत्।

''किं तत् उचितम्?'' शिशुं दृष्ट्वा वयं सर्वे खिन्ना:। सा तव मातरं गृहीत्वा रुदन्ती दृष्टा। सा शिशु: अस्ति इति कारणेन पार्श्वे किं प्रचलति इति ज्ञातुम् असमर्था आसीत्। तस्या: परिसरम् इतोऽपि सा जानती अस्ति। विस्फोटकानां महाध्वनि: अस्माकं गृहपार्श्वे विद्यमानं वृद्धं गृहस्थम् अपि आकुलीकृतवान्। चिनो, वयं तद्विषये अतीव दु:खिन: जाता:।'' इदानीं पितामही तथा किमर्थं वदति इति चिनु: सम्पूर्णतया ज्ञातवान्।

''तव तस्यापेक्षया अधिकं कष्टं जातं स्यात्। विस्फोटकेभ्य: निर्गतेन धूमेन तव श्वासावरोध: जात: स्यात्। अत: एव इदानीं त्वं पितृव्यस्य गृहं गन्तुम् इच्छसि'' इति चिनु: अवदत्।

''तत् अस्तु वत्स! अहम् अग्रिममासे प्रत्यागमिष्यामि।'' इति पितामही अवदत्।

''तत् न योग्यं पितामहि! अस्माकम् असीमितं मनोरञ्जनं युष्माकं सर्वेषामपि पीडाया: अपेक्षया अधिकं महत्त्वपूर्णं नास्ति। मनोरञ्जनम् इति कृत्वा तेन केवलं ध्वनि-वायु-प्रदूषणमेव भवति। बालानां रञ्जनम् अन्येषामं पीडां न कारयेत्। अत्र स्थित्वा पश्य यत् अहम् एनां दीपावलिं कथं ध्वनि-वायु-प्रदूषणमुक्तां करोमि इति। दीपावलि-उत्सवस्य आनन्द: केवलं केषाञ्चित् निमित्तं सीमित: नास्ति। स: तु सर्वेषाम्। पितामहि, किं तव मतम् अस्मिन् विषये?''

''चिनो, अहं तव सार्थमभिमानं वहामि। सर्वे जना: सुखिन: भवन्तु इत्येव सर्वेषाम् उत्सवानाम् अपेक्षा नास्ति किम्? इति सा स्मितहासपूर्वकम् उत्फुल्लनेत्राभ्याम् उक्तवती।



# तृण-तालवृक्षयो:

एकस्मिन् वनप्रदेशे कश्चन तालद्रुम: तथैव च किश्चन तृणकाण्डं परस्परसन्निधम् अतिष्ठताम्। तालतरु: तृणकाण्डम् अधिक्षिपति स्म। स: अवदत्-हे तृणकाण्ड, किमर्थं सदैव धरणिलग्नमसि त्वम्? पश्य माम्। अहो बलिष्ठ: उन्नत: च अहम्। न कथमपि मया सह तुलनायै अलं त्वम्।

तालद्रुमस्य एतद् वचनम् आकर्ण्य तृणं प्रत्यवदत्-'अलं स्वप्रशंसया। आत्मश्लाघया न त्वम् आत्मानम् अपनेतुमर्हसि। आत्मानं धारयितुं शक्तोऽहम्।

तदनन्तरम् एकदा अतिवृष्ट्या जलमयमिवाभवत् अखिलं विश्वम्। यदा तृणकाण्डं वर्षाजले न्यमज्जत् तदा सोपहासमवदत् तालवृक्ष: 'नित्यं कथयसि त्वं यद्-अहं तु समर्थ: इति, न दृश्यते तव सामर्थ्यमधुना' इत्युक्त्वा उपाहसत् स वृक्ष:।

अतीतानि कानिचन दिनानि। तृणकाण्डं न केवलम् अजीवत् अपि तु सबलं पुनरेकवारम् उदतिष्ठत्।

कञ्चित् कालात् अनन्तरं दुर्दिने प्रलयमारुत: प्रावहत्। जलधारासम्पात: प्रारभत। तडिद्भि: मेघगर्जनाभिश्च आकुलं नभ:। भीममारुतं सोढुम् अक्षम: स वृक्ष: धारासारेण पर्जन्येन पातित:।

तद् दृष्ट्वा तृणकाण्डमभणत्- हा हन्त। मित्र, ज्ञातं भवता स्वबलम्। एकवारमेव प्राप्तेन प्रलयमारुतेन पतितस्त्वम्। पर्जन्यबलात् निमज्जितेन मया तु स्वबलेन उद्धृत: आत्मा।

अत: मित्र, ज्ञेयं ह्येतद् सर्वै: यत्- क्षुद्रतरमपि यदि पश्यति कश्चनं जनम्, तदुपकारेण सार्थक्यं किम् उपहासेन ।

यद् यदुक्तं तृणकाण्डेन तद् सर्वं सम्मतमासीत् तालवृक्षस्य। तालवृक्ष: अवदत्, मित्र, सत्यमेव वदसि, क्षमस्व माम् इत्युक्त्वा प्राणान् उत्सृज्य पतित:।

*- ए. रामबाबू*





# शिथिलालयः - १९

*(शिखिमुखी विक्रमकेसरी च अनुचरैः सह शिथिलालयार्चकस्य उटजम् अभिधाव्य नागमल्लीम् अर्चकस्य बन्धनात् अमुञ्चताम्। अर्चकस्तु शबरगृध्रेण सह वनं पलायितः। 'ब्रह्मपुत्रनदप्रदेशात् तव प्रत्यागमनं यावत् अहं न कमपि परिणेष्यामि' इति नागमल्ली शिखिमुखिनं प्रत्यशृणोत्। ततस्ततः ...)*

अपराह्णसमये शिवालः स्वानुचरैः सह शबरग्रामं प्राप्नोत्। तस्य अनुपस्थितौ शिथिलालयस्य अर्चकः शबरग्रामम् आक्रम्य हाहाःकारं जनितवान् स्यात् वा न वा इत्यनया शङ्कया ग्रस्तः सः अस्वस्थचित्तः कथञ्चित् मार्गम् आक्रामत्। परं ग्रामं प्राप्य तेन तत्र किमपि अनिष्टं नानुभूतम्। अतः सः हृष्टमनाः सञ्जातः। ग्रामे सर्वत्रापि सर्वेषां क्षेममवर्तत।

ग्रामं प्राप्तवता तेन बहुदिनेभ्यः परं विक्रमकेसरिणः पित्रा जयपालेन प्रेषितानि तालपत्राणि सुखेन पठितुम् अवसरः लब्धः। तेषु पत्रेषु निर्दिष्टानि केषाञ्चन प्रदेशानां नामानि पठित्वा जयपालस्य पिता विक्रमकेसरी ब्रह्मपुत्रनदप्रदेशम् अनिवार्यतया किमर्थं द्वितीयवारम् अगच्छत् इति शिवालः ईषन्नजानात्। जयपालस्य पितुः विक्रमकेसरिणः द्वितीययात्रायाः लक्ष्यं ब्रह्मपुत्रनदस्थेषु बहुषु द्वीपेषु अन्यतमः वृश्चिकद्वीपः एव आसीत्। तस्मिन्नेव द्वीपे शिथिलालयो वर्तते इति कथ्यते स्म जनैः।

दासरि सुब्रह्मण्यम्



सुवर्णमणिमौक्तिकवैदूर्यादिधनराशिना सह शिथिलालयः अवर्णनीयया शिल्पसम्पदा परिपूर्णः इत्यपि श्रूयते स्म। तानि शिल्पानि आनीय विक्रमकेसरी स्वप्रासादम् अलङ्कर्तुम् इच्छति स्म।

विक्रमकेसरिणा तेषु तालपत्रेषु शिथिलालयं गन्तुम् आक्रमणीयस्य मार्गस्य सविस्तरं वर्णनं कृतमासीत्। कतिपयशतात् वर्षेभ्यः पूर्वं तच्छिथिलालयमन्दिरम् इभ्यनामकैः वनवासिभिः निर्मितमासीत्। प्रकृतिप्रकोपेण ब्रह्मपुत्रनदे सञ्जातेन विप्लवेन च शिथिलालयं परितः प्रदेशः जलमग्नतां प्राप्य द्वीपत्वं गतः। अतः तदालयं विस्मृतौ लुप्तम्। तस्य स्थानं न कोऽपि जानाति स्म। तथापि 'इभ्यजातीयाः केचन वृद्धाः शिथिलालयवतः द्वीपस्य विषये जानन्ति' इति केचन विश्वसन्ति स्म।

शतेषु तालपत्रेषु विद्यमानानि शिथिलालयसम्बन्धीनि तालपत्राणि अधिकृत्य विक्रमकेसरिणे किञ्चित् कथयता शिवालेन उक्तम्, "विक्रम, तव पितामहः विक्रमकेसरिप्रभुः अद्यापि जीवति इत्यत्र नाहं विश्वसिमि। सः वयसा मत्तः अपि वर्षीयान्। तदतिरिच्य विषज्वरस्य प्रभावक्षेत्रे ब्रह्मपुत्रनदप्रदेशे एकाकिनः विचरतः तस्य अद्यापि जीवनं दुश्शकमिति प्रतिभाति मे। तथापि एतत्सर्वं मयोक्तं त्वं तव पित्रे कथय। यदि सः तं प्रदेशं गन्तुम् इच्छति तर्हि तं रोद्धुं वयं न प्रभवामः। यदि त्वां सः तत्र प्रेषयितुं वाञ्छति तर्हि न तु केवलं शूरसेनदेशं यावत् अपि तु ब्रह्मपुत्रनदप्रदेशं यावत् तव साहाय्यार्थं तव सहचररूपेण मम पुत्रं शिखिमुखिनं प्रेषयाम्यहम्" इति।

तच्छ्रुत्वा विक्रमकेसरी कृतज्ञतया शिवालं धन्यवादान् व्याहरत्। अपरेद्युः प्रातरेव सः शिखिमुखिना सह स्वदेशं प्रातिष्ठत। मार्गे लुण्ठाकेभ्यः रक्षणार्थं शिथिलालयार्चकेण जनितायाः विपदः परित्रातुं च ताभ्यां सह विशालकायौ शबरयुवकौ शरीररक्षकरूपेण शिवालेन प्रेषितौ।

कामपि विपदम् अननुभूय शुभैः पथिभिः

पञ्चदशदिनानि निरन्तरं प्रोष्य विक्रमकेसरी शिखिमुखी च शूरसेनदेशम् आगच्छताम्। राजा जयपाल: विक्रमकेसरिण: मुखात् सर्वमपि निरवशेषं ज्ञात्वा अब्रवीत्, ''सत्स्वपि बहुषु विपत्सु स: ब्रह्मपुत्रनदप्रदेशं गत्वा तस्य पितु: वार्तां ज्ञास्यति एव।

जयपालस्य मन्त्रिण: प्रमुखा: सभासदश्च विनम्रतया अस्य निर्णयस्य अनङ्गीकारं प्रादर्शयन्। 'ईदृशं कठिनं कर्म वोढुं युवका: एव अर्हा:। अस्मिन् पश्चिमे वयसि सुदूरदेशं प्रति यात्रा महाराजस्य कष्टदा स्यात्' इति तै: मन्त्रितम्। तेषां मन्त्रणाम् ऊरीकृत्य राजा जयपाल: अस्मिन् कार्ये स्वपुत्रं विक्रमकेसरिणम् अयोजयत्।

यात्रासिद्धता सप्ताहाभ्यन्तरे पूर्णतां गता। विक्रमशिखिमुखिभ्यां सह सुशिक्षितयुद्धशास्त्रौ क्षत्रिययुवकौ जयपालेन प्रेषितौ। जातायां सिद्धतायां सर्वेऽपि प्रातरेव यात्रार्थं प्रस्थिता:। प्रस्थानात्प्राक् महता प्रेम्णा शिखिमुखिनं परिष्वज्य जयपाल: तस्य कण्ठे रक्षापदकम् अबध्नात्। तत्पदकं जयपालेन तस्य पितु: तालपत्राणां पेटिकायां प्राप्तमासीत्। तस्मिन् कालीमातु: चित्रम् अङ्कितमासीत्।

शिखिमुखी विक्रमकेसरी च तयो: द्वाभ्याम् अनुचराभ्यां सह पञ्चषान् मासान् यावत् वनमार्गेण यात्रां कुर्वन्तौ बहून् पर्वतान् क्रान्त्वा



नैका: नद्य: उत्तीर्य च कामाख्यापुरम् आगतौ। तत्र प्राप्य तै: निर्णितं यत् द्वित्राणि दिनानि तत्रैव विश्रम्य अग्रिमं मार्गं दर्शयन् कश्चन जन: अन्वेष्टव्य: तस्य साहाय्येन च इभ्यजातीयानां प्रदेश: गन्तव्य:। शूरसेनदेशस्य कश्चन पण्डित: जयपालाय अकथयत्, यत् 'तस्य पिता महाराज: विक्रमकेसरी कञ्चन समयं यावत् तस्मिन्नेव प्रदेशे न्यवसत्'।

विक्रमकेसरी तस्य सहचराश्च कामाख्यापुरं प्राप्य तत्र कस्यांश्चित् धर्मशालायाम् अवसन्। तदानीं तस्मिन् पुरे देवीप्रीत्यर्थं कश्चन उत्सव: आचर्यते स्म। उत्सवे भागं वोढुं देव्या: दर्शनार्थं च नगरं परित: पञ्चक्रोश्या: जना: आगच्छन्ति स्म। तेषु बहव: वनवासिन: विभिन्नजातीयाश्च

आसन्। ब्रह्मपुत्रनदप्रदेशं गन्तुं मार्गदर्शनार्थं कञ्चन सुज्ञं जनं प्राप्तुम् एष: उत्तम: अवसर: इति शिखिमुखी अचिन्तयत्। अत: स: विक्रमकेसरिणा अन्ययुवकाभ्यां च सह उत्सवभूमिम् अगच्छत्। नगरवीथिषु उभयतोऽपि असङ्ख्या: लघ्वापणा: रचिता: आसन्। तेषु आपणेषु हस्तिदन्तजवस्तूनि, मर्मरोत्पलनिर्मिता: मूर्तय:, मृगचर्मकृतानि वस्तूनि च अन्यै: बहुप्रकारकै: वस्तुभि: सह विक्रीयन्ते स्म।

चत्वारोऽपि युवका: आपणे विक्रीयमाणानि चित्राणि वस्तूनि पश्यन्त: मार्गे सरन्ति स्म। तावदेव चतुष्पथे गजचर्म प्रसार्य तस्मिन् मानवास्थीनि संरचय्य उपविष्ट: ज्यौतिषिक: तेषां दृष्टिपथं गत:। तेन मार्गेण गच्छत: जनान् स: आत्मानं प्रति आकर्षति स्म। तस्य सुदीर्घा श्मश्रु, जटापाश:, ललाटे रचित: कुङ्कुमतिलकश्च भूरि शोभन्ते स्म।

शिखिमुखी तस्य सहचराश्च तं सकृत् क्षणं यावत् दृष्ट्वा अग्रे गन्तुम् उद्युक्ता: आसन् तदैव स: ज्यौतिषिक: विक्रमकेसरिणं प्रति अङ्गुलीनिर्देशं विधाय उच्चै: अभाषत, "भो: शूरसेनदेशवासिन् विक्रम! तिष्ठ! शृणु मे वचनम्"।

नामोच्चारपूर्वकम् आह्वयन्तं तं ज्यौतिषिकं साश्चर्यं दृष्ट्वा विक्रम: तत्रैव अतिष्ठत्।

ज्यौतिषिकं परित: स्थित्वा तस्मै स्वकरतलं भविष्यकथनार्थं दर्शयन्त: जना: विक्रमकेसरिणं





तस्य सहचरान् च ध्यानपूर्वकं पश्यन्ति स्म।

शिखिमुखी ज्यौतिषिकं प्रति पदद्वयम् अग्रे गत्वा अपृच्छत्,''महाशय, करतलं परीक्ष्य मनुष्यस्य नाम कथयितुं शक्तान् काञ्चन ज्यौतिषिकान् अहं जानामि। परं भवान् तु मुखं दृष्ट्वा एव जनस्य नाम ग्रामं च ज्ञातुं प्रभवति। किम् भवान् पूर्वं कदाचित् अस्माकं प्रदेशे न्यवसत्?'' इति।

अट्टहास्यं कुर्वन् ज्यौतिषिकः अवदत्,''अहं तु अघोरीज्योतिःशास्त्रं प्रतिपदं जानामि। जातं, जायमानं, जनिष्यमाणं च सर्वमपि कथयितुं शक्नोमि, शिखिमुखिन्! येन मार्गेण यूयम् आगताः तेनैव झटिति प्रतिगच्छत। वृद्धः विक्रमकेसरी अधुना न जीवति। मूढाः यूयं सहस्रवर्षमित-आयुष्मतः महाशक्तिशालिनः शत्रुत्वं गच्छन्तः स्थ। यदि अद्यापि धाष्ट्र्येन ब्रह्मपुत्रनदप्रदेशं गमिष्यथ तर्हि निःसन्देहं मरणं प्राप्स्यथ। स्मरत ध्रुवम्! प्रत्यागन्तुं न शक्ष्यथ ततो यूयम्''।

तस्य तद्वचनं श्रुत्वा विक्रमकेसरी क्रोधाविष्टः सन् तं खड्गेन प्रहर्तुम् उद्युक्तः। परं शिखिमुखी तं तस्मात् निवारयन् तस्य समञ्जनमकरोत्, ''विक्रम! अलमविवेकेन! परकीये देशे स्मो वयम्। एषः कापटिकः ज्योतिषी शिथिलालयार्चकस्य मित्रं सेवको वा स्यात्। तस्मात् दुष्टादेव अनेन अस्मद्विषये ज्ञातं स्यात्। तन्नाम सोऽर्चकोऽपि अस्मिन्नेव नगरे अस्ति। मन्ये, अस्माकं नगरप्रवेशादारभ्यैव अस्मान् गुप्तरूपेण सः ईक्षते'' इति।

''ममापि तथैव मतिः। मया चिन्तितं यत् तस्मात् दुष्टात् मुक्ताः वयम्। अस्माभिः एतेषु सम्मर्दपूर्णमार्गेषु न सञ्चरणीयम्। तन्नोचितम्। अर्चकस्य सेवकाः रहः अस्मान् अन्वागम्य अभिधावितुं शक्नुवन्ति। चलत, वयं धर्मशालां प्रति गच्छाम'' इति विक्रमकेसरी अवदत्।

चत्वारोऽपि अर्धघण्टाभ्यन्तरे धर्मशालां प्राप्नुवन्। तदा धर्मशालायाः स्वामी तेभ्यः अकथयत्,''युष्माकं गुरुः युष्माकं प्रकोष्ठे अस्ति। घण्टायाः पूर्वं सः अत्र आगत्य युष्मान्

प्रतीक्ष्यमाण: वर्तते'' इति।

धर्मशालास्वामिन: वचनं श्रुत्वा सर्वेऽपि आश्चर्यम् अन्वभवन्। शिखिमुखी तं शङ्कापूर्णदृष्ट्या वीक्ष्य अपृच्छत्,''न कोऽपि अस्माकं गुरु:। न क: अपि आप्त: अतिथि: वा अत्र अपेक्षित: स: कोऽपि चोर: स्यात्। अस्माकं प्रकोष्ठं त्वं तस्मै अदर्शय: किम्?'' इति। किंदर्शन: स: किम् अवदत्, किमपृच्छत् इति भृशम् अपृच्छत् विक्रमकेसरी।

धर्मशालास्वामी भीत: सन् अवदत्, ''आम्, अहं तस्मै युष्माकं प्रकोष्ठम् अदर्शयम्। स: प्राय: कालीमातु: भक्त: अस्ति इति भाति। स: अवदत् यत् स: कस्यस्विद्देवालये अर्चक: युष्माकं गुरुश्च अस्ति'' इति। शिखिमुखिना विक्रमकेसरिणा एतावता ज्ञातं क: आगत: स्यादिति।

''भवतु। एनां समस्यां वयं परिहराम:। अस्माकं प्रकोष्ठात् यदि कोऽपि आक्रोश: श्रूयते चेत् त्वम् अर्धघण्टां यावत् कमपि तत्र आगन्तुं नानुमन्यस्व'' इत्युक्त्वा शिखिमुखी सपदि प्रथमाट्टे स्थितं स्वप्रकोष्ठं प्रातिष्ठत। अन्ये त्रयोऽपि वेगेन तम् अन्वगच्छन्।

विक्रमकेसरिणा भाटकेन स्वीकृतस्य प्रकोष्ठस्य द्वारं तु अनावृतमासीत्। पप्रथमं शिखिमुखी प्रकोष्ठं प्रविश्य तत्र शिथिलालयस्य अर्चकम् अपश्यत्। अर्चक: एकां काष्ठमञ्जूषां




विदारयितुं काञ्चन छुरिकां हस्ते धृत्वा तां प्रहरति स्म।

द्वारि स्थितं शिखिमुखिनं दृष्ट्वा अर्चक: विकृतस्वरेण हसित्वा अवदत्, ''शिखिन्! समये खलु आगतोऽसि। बहु उत्तमम्। त्वं तव सहचराश्च तत्रैव देहल्यां तिष्ठत। अहम् एनां लघुमञ्जूषाम् उद्घाटयितुं मम मन्त्रशक्ते: अस्थाने उपयोगम् अकृत्वा तां छुरिकया विदारयामि''।

शिखिमुखी देहल्याम् अतिष्ठत्। पृष्ठे तिष्ठन्तौ क्षत्रिययुवकौ अजितवीरभद्रौ नेत्रपल्लव्या द्वाररक्षणं सूचयित्वा स: पदद्वयम् अग्रे असरत् अवदच्च,''अर्चक, त्वं चिन्तयसि, यत् तस्यां मञ्जूषायां शिथिलालयस्य मार्गं प्रदर्शयन्ति

तालपत्राणि स्युः। परं तानि तु तत्र नैव सन्ति। पश्य! एषः विक्रमकेसरी तानि सर्वदा स्वस्य युतके निगूह्य स्थापयति। किञ्चिन्निकटम् आगम्य पृच्छ तम्। सः तुभ्यं सर्वं कथयिष्यति''।

विक्रमकेसरी स्वयुतकात् किञ्चन दीर्घं तालपत्रं निष्कास्य तस्मै प्रदर्शयत्। अर्चकेण तं दृष्ट्वा क्रोधेन दन्तैः दन्तान् निष्पीड्य उक्तम्, ''हुम्!! किमहं युष्मान् तालपत्राणि याचे? अस्तु, अहं मुखेन न, अपि तु छुरिकया याचे'' इत्युक्त्वा अर्चकः विक्रमकेसरिणि छुरिकाम् अक्षिपत्।

अर्चकस्य प्रहारं पूर्वमेव अनुमाय शिखिमुखी विक्रमकेसरिणं स्कन्धे धृत्वा तम् अधः नुदितवान्। अतः लक्ष्यात् च्युता सा छुरिका वेगेन आगत्य काष्ठमये कवाटे न्यस्ताऽभवत्। अर्चकं ग्रहीतुं शिखिमुखी उदप्लवत्, परं प्रकोष्ठस्य पृष्ठतः विद्यमानं किञ्चित् द्वारम् उद्घाट्य अर्चकः ततः अधः अकूर्दत्। पश्यतां सर्वेषामेव वायुवेगेन सः ततः निरगच्छत्।

एतेन चकितौ शिखिमुखी विक्रमकेसरी च स्वल्पेन विलम्बेन पृष्ठद्वारं प्राप्नुताम्। ताभ्यां चिन्तितं, 'यत् उपरिष्टात् कूर्दनेन अर्चकः मरिष्यति'। परं अधः तिष्ठता शबरगृध्रेण भूमौ पतनात्पूर्वमेव अर्चकः हस्ताभ्यां गृहीतः तत्समीपे स्थितयोः अश्वयोः अन्यतरे आरोपितः आत्मनाऽपि एकः अश्वः सोत्प्लुति आरुह्यत च।

शिखिमुखी झटिति मुखं परावर्त्य आक्रोशत्, ''अजित! वीरभद्र! युवां तौ पलायमानौ अनुधाव्य गृह्णीतम्!'' शिखिनः आदेशं श्रुत्वा अजितवीरभद्रौ सपदि सोपानेन अधः अधावताम्। अर्चकस्य शबरगृध्रस्य च मार्गम् अन्वसरताम्। *(अनुवर्तिष्यते)*



# आशा निराशा च

रङ्गनाथः रामनाथः च द्वौ प्रतिवेशिनौ आस्ताम् । तौ परस्परसुहृदौ अपि आस्ताम्। रङ्गनाथस्य पुत्रः उद्योगान्वेषणं कुर्वन् आसीत्। किन्तु नैकवारं प्रयत्ने कृते सत्यपि सः कमपि उद्योगं सम्पादयितुम् अशक्तः। सः एकस्मिन् नगरे कार्यं प्राप्तवान् आसीत्। किन्तु तत् अपि अन्तिमक्षणे तस्य हस्तात् च्युतम्।

कतिपयेभ्यः दिनेभ्यः अनन्तरं रङ्गनाथस्य पुत्रीं चन्द्रावतीं द्रष्टुं कस्यचित् विवाहोत्सुकस्य वरस्य कुटुम्बजनाः रङ्गनाथस्य गृहमागताः। ततः गमनात् प्राक् विवाहाय स्वानुमतिः प्रकटिता तैः। किन्तु नातिविलम्बेन तैः विवाहयोजकद्वारा सन्देशः प्रेषितः यत् 'अधुना ते एनं परिणयं नेच्छन्ति' इति। अनेन रङ्गनाथः खिन्नः जातः।

अनन्तरं कदाचित् रामनाथस्य पुत्रीं पद्मावतीं द्रष्टुम् अपि कस्यचित् वरस्य कुटुम्बजनाः तद्गृहं समायाताः। पद्मावत्याः विवाहः निश्चितः। न केवलं तावत् अपि तु तस्याः वाक्-दानसमारम्भः अपि महता उत्साहेन सम्पन्नः। कालान्तरेण रामनाथेन अपि वरपक्षात् स्वपुत्र्याः विवाहविच्छेदस्य सन्देशः प्राप्तः। रामनाथस्य मनः अदूयत। तेन स्वमित्रेण रङ्गनाथेन सह चर्चा कृता।

''भवता अपि समाना समस्या सम्मुखीकृता अस्ति। किन्तु अहम् एतत् ज्ञातुमेव न शक्नोमि यत् भवान् नैराश्यं कथं नानुभवति'' इति अपृच्छत् रामनाथः रङ्गनाथम्।

किञ्चित् विहस्य रङ्गनाथः अगदत्,''यदा अत्यपेक्षाः भवन्ति तदैव नैराश्यम् अनुभूयते अस्माभिः। यदा अहं किमपि कार्यम् आरभे तदा स्वमनसा सर्वदा मन्त्रये यत् यद्यपि एतत् कार्यं सफलतां न याति तथापि अहं निराशः न भवेयम्। अत एव नैराश्यं नानुभूयते मया कदापि। भवान् अपि एनं प्रयत्नं कृत्वा पश्यतु।''

*- प्रतापरविशङ्करः*



# आशा निराशा च

रङ्गनाथ: रामनाथ: च द्वौ प्रतिवेशिनौ आस्ताम् । तौ परस्परसुहृदौ अपि आस्ताम्। रङ्गनाथस्य पुत्र: उद्योगान्वेषणं कुर्वन् आसीत्। किन्तु नैकवारं प्रयत्ने कृते सत्यपि स: कमपि उद्योगं सम्पादयितुम् अशक्त:। स: एकस्मिन् नगरे कार्यं प्राप्तवान् आसीत्। किन्तु तत् अपि अन्तिमक्षणे तस्य हस्तात् च्युतम्।

कतिपयेभ्य: दिनेभ्य: अनन्तरं रङ्गनाथस्य पुत्रीं चन्द्रावतीं द्रष्टुं कस्यचित् विवाहोत्सुकस्य वरस्य कुटुम्बजना: रङ्गनाथस्य गृहमागता:। तत: गमनात् प्राक् विवाहाय स्वानुमति: प्रकटिता तै:। किन्तु नातिविलम्बेन तै: विवाहयोजकद्वारा सन्देश: प्रेषित: यत् 'अधुना ते एनं परिणयं नेच्छन्ति' इति। अनेन रङ्गनाथ: खिन्न: जात:।

अनन्तरं कदाचित् रामनाथस्य पुत्रीं पद्मावतीं द्रष्टुम् अपि कस्यचित् वरस्य कुटुम्बजना: तद्गृहं समायाता:। पद्मावत्या: विवाह: निश्चित:। न केवलं तावत् अपि तु तस्या: वाक्-दानसमारम्भ: अपि महता उत्साहेन सम्पन्न:। कालान्तरेण रामनाथेन अपि वरपक्षात् स्वपुत्र्या: विवाहविच्छेदस्य सन्देश: प्राप्त:। रामनाथस्य मन: अदूयत। तेन स्वमित्रेण रङ्गनाथेन सह चर्चा कृता।

''भवता अपि समाना समस्या सम्मुखीकृता अस्ति। किन्तु अहम् एतत् ज्ञातुमेव न शक्नोमि यत् भवान् नैराश्यं कथं नानुभवति'' इति अपृच्छत् रामनाथ: रङ्गनाथम्।

किञ्चित् विहस्य रङ्गनाथ: अगदत्,''यदा अत्यपेक्षा: भवन्ति तदैव नैराश्यम् अनुभूयते अस्माभि:। यदा अहं किमपि कार्यम् आरभे तदा स्वमनसा सर्वदा मन्त्रये यत् यद्यपि एतत् कार्यं सफलतां न याति तथापि अहं निराश: न भवेयम्। अत एव नैराश्यं नानुभूयते मया कदापि। भवान् अपि एनं प्रयत्नं कृत्वा पश्यतु।''

*- प्रतापरविशङ्कर:*





# परोपकार:

इन्दौरराज्ये महादेव्याम् अहिल्यादेव्यां प्रशासत्यां गन्धेकरनामा ख्यात: सङ्गीतज्ञ: प्रतिवसति स्म। स: न केवलं प्रतिभाशाली महान् सङ्गीतज्ञ: अपि तु अनन्य: भगवद्भक्तोऽपि आसीत्। स्वरचितानि गीतानि सुश्राव्यस्वरावल्यां सुबध्य तान् प्रगाय जनान् आनन्दयत्।

कविरुपेण तथैव गायकरुपेण गन्धेकरमहोदयस्य कीर्तिपरिमल: सुदूरं प्रसृत:। नैके भक्ता: सङ्गीतशरण्या: धनिकादयश्च नित्यम् एतस्य गृहमाग्यत्य तस्मै विविधान् उपहारान् प्रायच्छन्। गन्धेकर: तान् प्राप्तोपहारान् दीनजनेषु व्यतरत्। यावद्धनम् अयं प्राप्नोत् तत् नि:शेषं सत्पात्रेषु दानरुपेण व्यतरत्। यावद्धनं व्यतरत् तावदेव पुन: प्राप्नोत्।

अनपत्यतां विना न गन्धेकरमहोदयस्य जीवने किमपि न्यूनमासीत्। अन्तत: निस्सन्तान: एव स: परब्रह्मलिङ्गे पाण्डुरङ्गे विलीन:। जीवितस्य चरमक्षणे स्वपत्नीं रुक्मामाहूय अवदत् स:-'अपत्यहीनौ एव आवाम्। अपि च पुत्रप्राप्त्या एव सापत्यता इति न मन्ये। मत्पश्चात् मदैश्वर्यस्य विनियोग: वापीकूपतडागदेवालयपथिकशालानां निर्माणे भवतु इति मे मनीषा इति।

पतिमरणादनन्तरं गन्धेकरमहोदयस्य मनोरथसिद्ध्यर्थं रुक्मादेवी कटिबद्धा अभवत्। किन्तु तत्र महान् प्रत्यूह: आपतित:। अथैकदा इन्दौरराज्यस्य सेनाधिपति: तुकोजिनामा आगत्य अकथयत्- 'गन्धेकरमहोदयानामनपत्यत्वात्

पी.व्ही.आर्. मूर्ती

तेषां निखिला धनराशि: विधिमनुसृत्य राजगामी भवेत्। अत: नि:शेषं धनं महाराज्ञ्यै समर्पयितव्यम्। रुक्मादेवी तद्धनेषु किञ्चित् स्वनिर्वाहार्थं रक्षितुं इच्छति चेत् रक्षतु नाम' इति।

रुक्मादेवी स्वकान्तस्य चरमामिच्छां सेनाधिपतये न्यवेदयत्। परं का गति:? अनतिक्रमणीयं राज्यविधानम्। तुकाजि: अपि अगतिक:। स: समग्रां धनराशिं राज्यकोशे समार्पयत्।

तत: रुक्मादेवी विज्ञप्तिपत्रमेकं महाराज्ञ्यै अहिल्यादेव्यै समर्पितवती। अहिल्यादेव्या: राजप्रासादं प्राप्य सा न्यवेदयत्-'राजकोशे न्यस्त: मम पत्यु: धनसञ्चय: पुनर्दीयते चेत् वापीकूपतडागदेवालयादय: निर्माय मम स्वामिन: इच्छापूर्ति: क्रियते' इति।

रुक्मादेव्या: विज्ञप्तिं श्रुत्वा महाराज्ञी आदिशत्-'प्रत्यर्पयितव्य: गन्धेकरमहोदयस्य समग्र: अर्थसञ्चय:' इति।

तुकाजि: अवदत्-'विधिविरुद्धं ह्येतत्' इति। महाराज्ञी अपृच्छत्-'एतस्या: धनराशे: विनियोग: कथं क्रियते अस्माभि:?' इति।

तुकाजि: प्रत्यवदत्-देवी, वापीतडागखननादि, देवालयपथिकशालानिर्माणादि कार्याणि जनोपयुक्तानि सिद्धानि भविष्यन्ति अनेन धनेन' इति।

एतान्येव इष्टापूर्तादीनि कार्याणि रुक्मादेवी अपि कर्तुमिच्छति एतेन धनेन। तत्र एक: एव विशेष: यत् राजसेवका: वेतनकाङ्क्षिण: रुप्यकार्थम् एतानि कार्याणि करिष्यन्ति, एषा रुक्मा तु पतिप्रेम्णा धनस्य विनियोगं करिष्यति। न एकमपि रुप्यकं तदर्थमपेक्षते। अत: तस्या: धनं प्रत्यर्पयितव्यमिति मे आदेश:' इति आदिशत् महामहिषी सेनाधिपतिम्।



# विचक्षण: वानर:

कस्याश्चित् नद्या: तीरे निवसन् एक: वानर: नदीं तीर्त्वा अपरं तीरं गन्तुम् इच्छति स्म। यतो हि अपरस्मिन् तीरे फलयुक्ता: बहव: तरव: आसन्। किन्तु नदीं पारयितुं न कोऽपि मार्ग: आसीत्।

अथ स: मर्कट: नदीतीरे तरन्तं कमपि मकरम् उपागच्छत् अवदत् च ''रे मित्र, किं ते कुशलं सर्वम्? अहं त्वां सर्वदा एकाकिनमेव पश्यामि। मम आप्तस्वकीया: तु न सन्ति।''

''किन्तु मम बहव: स्वकीया: सन्ति। अस्माकं सङ्ख्या तावती वर्तते यत् वयं सर्वे मिलित्वा सम्पूर्णां नदीम् उपरोद्धुं शक्नुम:।'' मकरेण उत्तरितम्।

''ओ:....। एतत्तु त्वम् अतिशयेन वर्णयसि। अहं तु तव वचनं तावत् न विश्वसिमि यावत् मम नेत्राभ्याम् अहं तथा न पश्यामि'' अवदत् मर्कट:।

''क्षणं यावत् तिष्ठतु'' इत्युक्त्वा मकर: नद्या: अन्तर्भागं गत:। स: स्व-आप्तान् सर्वानपि मकरान् आहूय नदीजले तथा तरितुम् उक्तवान् येन नद्या: अपरस्य तीरस्य दूरत्वम् अवगम्येत।

''भो:! अहं तु चिन्तयामि प्राय: भवतां सङ्ख्या चतुर्विंशति: स्यात्'' अभणत् वानर:।

''किम्? केवलं चतुर्विंशति:? वयं तु शताधिका: स्म:। यदि मम वचने न विश्वास: तर्हि गणय अस्मान्'' उच्चै: अभाषत मकर:।

''आम्, निश्चयेन।'' इत्युक्त्वा वानर: प्रथमस्य मकरस्य पृष्ठे उदप्लवत्। तेन गणना आरब्धा,''एकम्....''। तत: प्रत्येकस्य मकरस्य पृष्ठे उत्प्लुत्य तेन तावत् पर्यन्तं गणना कृता यावत् स: अपरं तीरं न प्राप्तवान्। अपरं तीरं प्राप्य स: उच्चै: अवदत्,''अयि मित्राणि, भवद्भि: नदीं पारयितुं मम साहाय्यं कृतम्। तदर्थं धन्यवादा:'' इति।





# दानशीलता

पुरा कदाचित् शिवसतीपुरे नीलवर्मा लुब्धवर्मा च इति मित्रद्वयं वसति स्म।

तौ द्वौ अपि तत्प्रदेशस्य गन्धद्रव्याणि मौक्तिकानि विविधवर्णान् पाषाणान् औषधिवनस्पती: सङ्गृह्णीत: स्म। तानि विदेशं नीत्वा तौ तेषां तत्र विक्रयणं कुरुत: स्म। अनेन व्यापारेण बहु लाभं सम्प्राप्य लघुकाले एव तौ धनिकौ अभवताम्। यदा नीलवर्मा तस्य लाभधनस्य किंचित् भागं विदेशस्य जनानां कल्याणार्थं व्ययीकरोति स्म तदा एव लुब्धवर्मा सर्वं लाभं संगृह्य आनन्दित: भवति स्म। परं तस्य आनन्द: नीलवर्मणा सौजन्यकर्मभि: अर्जितस्य ख्याते: अपेक्षया निस्तेजा: भवति स्म।

कस्मिंश्चित दिने लुब्धवर्मा मित्रेण नीलवर्मणा मिलित: अवदत् च ''प्रिय मित्र! त्वं कष्टार्जितं तव धनं चिन्तनं विना व्ययीकरोषि। अस्माकं प्रथमे वयसि एव अस्माभि: उत्तमम् अर्जनं कर्तुं शक्यते। किं वृद्धावस्थायाम् एवं धनार्जनं शक्यं भवेत्? अस्माभि: स्वभविष्यकालस्य विचार: अपि अवश्यं करणीय:। यदा अस्मत्सविधे धनम् अवशिष्टं न भवेत् तदा को वा अस्मान् शुश्रूषेत? अत: धनसङ्कलनम् इति भविष्यं मनसि निधाय अत्युत्तम: उपाय: वर्तते।'' एवं प्रकारेण नीलवर्माणं तस्य दानवृत्ते: अपाकर्तुं स: प्रायतत।

स्वमित्रस्य अभिप्रायं ज्ञात्वा नीलवर्मा

बी. भीमेश्वर रॉय



स्थिरतया अवदत्-''हे लुब्धवर्मन्, आवयोः अर्जितः लाभः सर्वः विदेशस्थ-जनेभ्यः एव वर्तते। मया स्वभविष्यकालः पूर्णतया न दुर्लक्ष्यते। मम परिवारार्थं मया अर्जितस्य कश्चित् भागः रक्ष्यते। भविष्यार्थं लक्षशः रुप्यकाणां सङ्ग्रहणं मया न इष्यते। अतः एव अहम् तावत् एव सङ्ग्रहणं करोमि यावत् भविष्ये कदाचित् आवश्यकं भवेत्, अधिकम् अर्जितं धनञ्च दानार्थं विनियोजयामि। मम जीवने तदपेक्षया अधिकः परितोषविषयः कोऽपि नास्ति।''

लुब्धवर्मा स्वमित्रवचांसि न इष्टवान्। तथापि तेन मित्रेण साकं विवादः न कृतः। गृहम् आगत्य सः विचारम् अकरोत्। नीलवर्मणः वचस्सु किमपि तथ्यमस्ति इति सः अवगतवान्। परं सः तस्य वचांसि पूर्णतया नावमन्यत। सः मित्रस्य स्वस्य दृष्टेः च विचारेण मध्यमार्गम् निश्चितवान्। परं सः स्वस्य निर्णयं स्वपरिवारजनेभ्यः अपि न कथितवान्।

गच्छता कालेन द्वयोः अपि मित्रयोः व्यापारः उन्नतिं गतः। विदेशेषु अपि नीलवर्मणः सत्कार्यार्थं ख्यातिं मध्ये एव कदाचित् लुब्धवर्मा शृणोति स्म।

एवमेव दिनानि अतीतानि। अकस्मात् कस्मिंश्चित् दिने लुब्धवर्मा अस्वस्थः जातः। सः अर्धाङ्गवायोः आघातेन पीडितः अतः तस्य एकः पादः एक हस्तः च अचेतनौ अभवताम्। सः मुखस्य स्नायून् अपि सञ्चालयितुं नाशक्नोत्। लुब्धवर्मणः सर्वम् आयोजनं विरुद्धदिशि प्रावर्तत। तस्य पुत्राः स्थानिकवैद्यान् पृष्टवन्तः। परं तत्र कोऽपि लाभः नासीत्। ते वैद्याः स्वस्य- असामर्थ्यं प्रकटितवन्तः।

लुब्धवर्मा स्वस्य दुःस्थितिं परिज्ञातवान्। सः किमपि कथयितुम् ऐच्छत्। परं नाशक्नोत्। स्वकीर्तिं प्रस्थापयितुं विदेशेषु महता प्रमाणेन स्थापितं कोषनिधिं स्मारं स्मारं स अधिकमेव अस्वस्थः जातः।

यदा नीलवर्मा लुब्धवर्मण: अस्वास्थ्यविषये ज्ञातवान् तदा स: विदेशे आसीत्। सोऽतीव दु:खी जात:। विदेशस्योत्तमान् वैद्यान् स्वीकृत्य स: मातृदेशं प्रति प्रस्थितवान्। ते वैद्या: रुग्णं परीक्ष्य विश्वासं प्रकटितवन्त: यत् स: रुग्ण: किञ्चित् प्रमाणेन वा पूर्वस्थितिं प्राप्स्यति।

स्वमित्रं दृष्ट्वा लुब्धवर्मण: पश्चात्ताप: अभवत्। स्वमित्रापेक्षया अधिकां प्रसिद्धिं प्राप्तुं विदेशेषु रक्षितं महत् धनं सर्वं व्यर्थं भविष्यति इति विज्ञाय स: अनियन्त्रितं रोदनं कृतवान्। स: अन्यत् किमपि कर्तुं नाशक्नोत्।

मित्रस्य अगतिकावस्थां दृष्ट्वा नीलवर्मण: अपि सहसा प्रावर्तताश्रुधारा।

वैद्या: लुब्धवर्मण: उपचारान् प्रारब्धवन्त:। क्षिप्रमेव, लुब्धवर्मा आरोग्यं लब्धवान्। स: स्वहस्तपादयो: शक्तिं पुन: प्राप्तवान्। स: वाचम् अपि पुन: लब्धवान्। स: त्वरितं नीलवर्माणम् आहूतवान्। स: तस्मै विदेशेषु रक्षितधनविषये सर्वं कथितवान्। स: नीलवर्माणं प्रार्थितवान् यत् 'तेन धनेन विदेशे एव तन्नागरिकाणां निमित्तं चिकित्सालयानां निर्माणं करोतु' इति।

लुब्धवर्मणि जातं परिवर्तनं दृष्ट्वा नीलवर्मा अतीव परितुष्ट:। प्रशंसनीयं कर्म कर्तुम् उद्युक्तस्य मित्रस्य अभिनन्दनं कृत्वा स: तथैव करिष्यति इति लुब्धवर्माणं प्रतिश्रुतवान्। स: झटिति तथा आचरितवानपि। इदानीं नीलवर्मणा सह लुब्धवर्मण: ख्याति: अपि सर्वत्र प्रसृता। लुब्धवर्मा आनन्दित: जात:। स्वपुत्राणां साहाय्येन स्वदेशे एव स: व्यापारं कुर्वन् तत्रैव नैकेषु दानकर्मसु अपि सहभागी जात:। एवं स: अवशिष्टजीवनं सार्थकतां नीतवान्।

अत: उच्यते, 'गौरवं प्राप्यते दानान्नतु वित्तस्य सञ्चयात्। स्थितिरुच्चै: पयोदानां पयोधीनाम् अध:स्थिति:।



# मुखपृष्ठकथा



## दीपावली दीपानाम् उत्सव:

अस्या: सञ्चिकाया: मुखपृष्ठे भारतस्य लोकप्रियोत्सवस्य दीपोत्सवस्य चित्रणम् कृतम्। आभारतम् समानतया उत्सवानाम् आचरणं भवति। उत्सवसूत्रेण बद्ध: अस्माकं देश: इति अस्माकम् एकताया: वैशिष्ट्यम्। दक्षिणभारते दीपावली नाम श्रीकृष्णसत्यभामाभ्यां कृतस्य नरकासुरवधस्य संस्मरणम् तथा च उत्तरभारते सीताहितस्य प्रभुरामचन्द्रस्य वनवासात् प्रत्यागमनस्य आनन्दोत्सव:।

इयं विविधता एव अस्माकं संस्कृते: वैशिष्ट्यं वैभवं च। यद्यपि सर्वत्र समानोत्सवानाम् आचरणं भवति तथापि सर्वत्र तेन उत्सवेन सह सम्बद्धा: पुराकथा: आचरणपद्धतय: च भिन्ना:।

१९५१ नोव्हेम्बर मासे चन्दमामा सम्पादकगणेन निश्चितं यत् हिन्दीमासिकनिमित्तमेव विशेष- दीपावली चित्रं निर्मातव्यम् इति। तदनु एम्.टी.व्ही. आचार्य: इति चित्रकार: प्रार्थित:।

परन्तु अन्यासु सर्वासु भाषासञ्चिकासु दीपावली मुखपृष्ठं सर्वथा पृथगेव अवर्तत। तत्र शीर्षकम् आसीत्-'ईश्वर: सर्वत्र अस्ति इति नारदस्य अवबोध:'

प्राचीनकाले चित्रम् इव मुखपृष्ठस्य शीर्षकमपि कलाकृते: भागरूपेण हस्तेनैव आलिखितं भवति स्म। अधुना सर्वासु भाषासु मुद्रणार्थम् अस्माभि: शीर्षके रङ्गलेपनं कृतम् अत: हिन्दी-शीर्षकं द्रष्टुं न शक्ष्यन्ति भवन्त:। तदानींतनी सरलजीवनसरणि: एव चित्रबद्धकृता आचार्यवरेण। मात्रा बालकै: सह दीपोत्सवस्य आचरणं करोति इति। सरल: निर्मल: च आनन्द: परन्तु अत्यन्तम् अमूल्य:।

तच्चित्रं ऑक्टोबर २०११ दीपावलीसञ्चिकाया: मुखपृष्ठे पुन: प्रकाश्यते अस्माभि:। द्वादशसु अपि भाषासञ्चिकासु तस्य दर्शनं पुन:स्मरणं च वाचकानां भूरि मोदाय कल्पेत इति आशास्महे।

# कोऽहं भविष्यामि?



**सद्य**: एव मया विमानप्रवास: कृत:। उड्डाणसमये मम मनसि केचन प्रश्ना: समुदिता:। यथा विमानचालक: विमानचालनप्रशिक्षणं कुत्र प्राप्तवान्? पितु: समीपे यानचालनस्य यथा प्रमाणपत्रं (license) विद्यते, तद्वदेव किमेते विमानचालका अपि प्रमाणपत्रं लभन्ते। इदृशा: बहव: प्रश्ना: मम मनसि आगता:। अत: प्रत्यागत्य शीघ्रमेव अहं व्यवसायमार्गदर्शिकया मिलित्वा मम संशयानाम् उत्तराणि प्राप्तवान्।

सा मह्यं कथितवती यत् विमानचालनव्यवसाय: अपि अतीव रामोश्चकर: अर्थप्राप्तिकर: च। अनन्तरं अस्य व्यवसायस्य कृते कानि कौशलानि आवश्यकानि इत्यपि तया कथितम्। विमानचालका: व्यावसायिकतन्त्रज्ञाने अतीव निष्णाता:, विविधप्रकाराणि विमानानि चालयितुम् च प्रशिक्षिता: भवन्ति। व्यावसायिकविमानचालकस्य प्रमुखा: क्षमता: एवं स्यु:- विमानयानस्य संयमेन चालनम्, यन्त्रस्य पूर्णतया स्ववशत्वम्, आपत्कालीनपरिस्थितौ अल्पसमये योग्य निर्णयस्वीकरणम् च। यत: विमानचालक: एव यातॄणां सुरक्षाया: सुखमययात्राया: च कृते दायित्ववान् भवति। महता प्रमाणेन विमानचालका: व्यावसायिक-विमानयात्रासंस्थासु कार्यं कुर्वन्ति ये स्वस्य कार्यनिमित्तं विमानानानि क्रीणन्ति, वस्तुजातस्य रात्रौ एव नयनानयनार्थं च तेषाम् उपयोगं कुर्वन्ति।

विमानचालक: शारीरिक-मानसिक-दृष्ट्या च आरोग्ययुक्त: भवेत्। स्पष्टा दृष्टि: रङ्गसंवेदना, जागरूकता, आत्माविश्वासेन कठिनप्रसङ्गेषु निर्णयक्षमता, स्वयंनेतृत्वम् उच्चतान्त्रिकं ज्ञानम् च एते गुणा: तस्मिन् अनिवार्या:।

विमानचालकस्य प्रशिक्षणार्थम् अर्हता- न्यूनातिन्यूनं १७ वर्षाणि आयु:, तथा भौतिकशास्त्रं गणितशास्त्रं चेति विषयौ अधिकृत्य १०+२ शिक्षणम्। विमानप्राधिकरणेन निर्णीता: शारीरिकयोग्यतानियमा: अपि पालनीया: भवन्ति। Commercial Pilot Licence प्राप्तये विमानचालनप्रशिक्षणस्य कृते सामान्यत: २५ लक्षमितरुप्यकाणां व्यय: सम्भवति। तत्र २०० घण्टात्मकं विमानचालनस्य प्रशिक्षणम्; DGCA द्वारा सञ्चालितानां परीक्षाणाम् अभ्यासक्रमस्य पाठनम् अन्तर्भवति विमानचालनप्रशिक्षणस्य कृते १५-१८ मासानां कालावधि: अपेक्षित:।

*- साई*

# चन्दमामीया सामान्यज्ञानपरीक्षा - ३३

*(ऊनषोडशवर्षीयाणां कृते)*

***Co-sponsored by Infosys FOUNDATION, Bangalore***

**समुचितोत्तरदाता अर्हति `२५०/- पारितोषिकत्वेन***

***एकाधिकजना: यदि शुद्धम् उत्तरं प्रेषयेयु:, तर्हि प्रतिजनं `५०/- दास्यन्ते पारितोषिकत्वेन।**

**अधोक्तं क्रियतां भवद्भि:-**

१. उत्तराणि समपत्रे लेखनीयानि।

२. नाम, वय: सङ्केत: (पिन् कोड्सहित:) प्रेषणीय:।

३. पिहितपत्रे **चन्दमामीया सामान्यज्ञानपरीक्षा - ३३** इति लेखनीयम्।

४. ३० नवम्बर पूर्वं भवदुत्तराणि अस्माभि: प्राप्तानि भवेयु: तथा तानि प्रेषणीयानि।

५. २०१२ तमवर्षस्य जनवरीमासीये अङ्के परिणाम: प्रकाशयिष्यते।

## महात्मा गान्धिमहोदय:



१) महात्मन: गान्धिमहोदयस्य पूर्णं नाम किम्?

२) महात्मन: गान्धिमहोदयस्य जन्मस्थलं किम्?

३) गान्धिमहोदयस्य मनसि प्रभावं जनितवत: नाटकस्य नाम किम्?

४) गान्धिमहोदयेन लण्डननगरे किं पठितम्?

५) कस्मिन् वर्षे गान्धिमहोदयेन 'मुच्यतां भारतवर्षम्' इति आन्दोलनम् आरब्धम्?

६) गान्धिमहोदयेन 'लवणसत्याग्रह:' कदा कृत:?

७) गान्धिमहोदयेन सह का घोषणा सम्बद्धा?

८) कदा केन च गान्धिमहोदयस्य वध: कृत: ?

## चन्दमामीया सामान्यज्ञानपरीक्षा - ३० जुलाई २०११ उत्तरम्

१) अब्राहम: २) स्टार ऑफ डेविड ३) तत्र ६१३ आदेशा: सन्ति
४) हिब्रू ५) 'जेनिसिस्'(उत्पत्तिवादविषये) पुस्तकम् ६) कोशर: ७) सब्बाथ
८) ४००० वर्षेभ्य: पूर्वम् इस्रैलदेशे ९) यहूदीनां नववर्षम्

*जुलाई'११ मासस्य सामान्यज्ञानपरीक्षाया: विजेतृपदं न केनापि प्राप्तम्।*



# हस्यताम् उदरोपपीडम्



*मनुष्यः* - मम प्रतिवेशी आरात्रि भित्तौ ताडनध्वनिं करोति।

*स्त्री* - तेन रात्रौ निद्राबाधा अवश्यं जायमाना स्यात्।

*मनुष्यः* - निद्रबाधा तु न; परन्तु रात्रौ मम वाद्यवादनाभ्यासे तेन अवश्यं बाधा भवति।



*मनुष्यः* - वैद्यवर, अस्यां द्रोण्यां महान् छेदः वर्तते। कृपया एतत् सम्यक् करोतु भवान्।

*वैद्यः* - अरे न जानासि वा अहं कः इति।

*मनुष्यः* - जानामि किल! भवान् तु Plastic surgeon अतः एव इयं plastic द्रोणी भवत्सविधे आनीता।



न्यायालये न्यायाधीशः अपराधिनं चोरं क्रोधेन अवदत्। ''गतपञ्चदशवर्षेभ्यः त्वाम् अस्मिन् न्यायालये सातत्येन चौर्यापराधार्थं पश्यामि। किं त्वं लज्जां न अनुभवसि? अहं किमर्थं लज्जाम् अनुभवेयम्? भवतापि गतपञ्चदशवर्षेभ्यः आसनं न परिवर्तितं खलु? किं तेन भवान् लज्जितः?

किम् अस्य कुक्कुरस्य मूल्यं दशसहस्त्ररूप्यकाणि? अतीव महार्घः प्रतिभाति मे।

एवं न वदतु। इदृशः स्वामिनिष्ठः कुक्कुरः तु अल्पमूल्येन न लभ्यते।

अयं कुक्कुरः सत्यमेव स्वामिनिष्ठः वा?

आम्! मया इतःपूर्वं पञ्चवारम् एषः विक्रीतः। परन्तु प्रतिवारं द्वादशघण्टातः पूर्वमेव अयं पुनः मां प्रति आगच्छति स्म। अस्ति खलु एषः स्वामिनिष्ठः?



# नूडलखाद्यविषये जानीहि



*नूडलस्य उद्गमः कुतः? चीनतः इटलीतः वा अरेबियातः? न तत् स्पष्टम्। किन्तु अत्र सन्ति काश्चन रञ्जकाः कथाः।*

जगति विविधस्थानेषु विविधरूपेण नूडलखाद्यस्य उपयोगः भवति। इतिहासतज्ज्ञैः तन्तुसदृशैः पीतनूडलैः पूरितः, चतुःसहस्रं (४०००) वर्षपुरातनः घटः पीतनदीसमीपे प्राप्तः। तर्हि 'नूडल' इति पुरातनतमम् अन्नम्।







यदि भवन्तः जापानदेशे नूडलखाद्यं खादन्तः सन्ति चेत् 'सूऽऽऽऽप्' ध्वनिं मा विस्मरन्तु। एषा एव पद्धतिः अत्र। सैव यजमानस्य कृते प्रशंसा।

चीनदेशे केकखाद्यस्यस्य अपेक्षया नूडलखाद्येनैव एव जन्मोत्सवः भवति। किमर्थं नाम 'नूडल' दीर्घायुषः चिह्नम्। एतद् दीर्घायुषि-नूडलं न कदापि कर्त्यते। जन्मदिनस्य उपहारोऽपि कदाचित् नुडलखाद्यमेव भवति।





ड्रॅगनश्मश्रु नूडलस्य विषये श्रुतमस्ति किं भवद्भिः? फेब्रुवारीमासस्य चान्द्रराशि-चिह्नम् ड्रॅगनः अस्ति। तस्य विशेषप्रतिपत्तिरूपेण विशेषतया फेब्रुवारीमासे ड्रॅगननूडलान्नं खाद्यते। एतद् नूडलखाद्यं श्मश्रुकेशसदृशं भवति।



चीनदेशे हस्तकर्षित-नूडलम् इति पारंपारिक-पाककृतिः। एषा त्रिविक्रमा (त्रिसोपानात्मिका) पद्धतिः व्यावर्तनम्-अवनमनम्-कर्षणं च। एषा पाककृतिः नाम ऐन्द्रजलिकस्य खेलः एव।



उडोन-जापानी-नूडलं तन्तुसदृशं भवति तथा च उष्णं वा शीतं परिवेष्यते। खिस्ताब्दस्य नवशततमे शतके बौद्धसाधकैः एतद् नूडलं चीनतः जापानं प्रस्तुतम्। शतवर्षपूर्वम् 'असाकुसा' इत्यत्र स्थितः देवालयः प्रसिद्धः धनिकः जातः बौद्धयात्रिकेभ्यः उडोन-नूडलं विक्रीय एव।



जापानी-उपहारगृहेषु 'नागाशी सोमेन' परिवेष्यते। नूडलमेतत् तरण्डे शीतजले स्थाप्यते। जनैः तत् पुनः स्थालिकायां निस्रवनात् पूर्वं सत्वरं तक्ष-सूचीभ्यां ग्रहीतव्यम्। एतदर्थं कौशल्यं चातुर्यं च आवश्यकम्। सूदः यदा नूडलम् आनयति तदा 'इकुयो' शब्देन तस्य आगमं आवेदयति।



जूक-सिंग-नूडलं कया पारम्पारिक पद्धत्या परिष्क्रियन्ते जानन्ति किम्? सूदः वंशमारोहति। तेन काष्ठेन सर्वघटकान् निष्पीडयति। एतेन नूडलं सम्यक् तन्यतां प्राप्नोति।



पश्चाधिकद्विसहस्रतमे शतके आपात-नूडलं प्रथममेव आवकाशे यातम्। 'निस्सिन फूड' रामेन-नूडलस्य कृते प्रसिद्धम्। तेनैव कन्दुकाकारं 'अवकाश-रॅम' (स्पेसरॅम) नूडले परिचायितम्। अस्य विशेषता नाम खगोलशास्त्रज्ञाः चोषणस्यापेक्षया सूचीचमसेन (Fork) तत् खादितुं शक्नुवन्ति।





**नूडलस्यविषये प्रसिद्धानि वचनानि-**

Use your noodle नाम 'स्वबुद्धेः उपयोगः'। रशियनजनाः यदा वदन्ति 'I am not hanging noodles on your ears' तदा आशयः भवति -अहं तव पादौ नावकर्षामि।'



# वर्ध्यताम् शब्दसम्पत्तिः

कति भारतीयाः भाषाः ज्ञायन्ते भवद्भिः ? अधुना चन्दमामा-साहाय्येन भारतीयाः भाषाः पठित्वा कामं भारतभ्रमणं क्रियताम् । अधस्तनं शब्दपटं दृष्ट्वा स्वभाषायां वाक्यं पठन्तु। अनन्तरं निर्देशानुसारं तदेव वाक्यम् अन्यासु भाषासु कथं वक्तव्यम् इति अवगच्छन्तु ।





| English | Where are you going? | I am going to office. |
|---|---|---|
| Sanskrit | भवान् कुत्र गच्छति? | अहं कार्यालयं गच्छामि। |
| Telugu | మీరు ఎక్కడికి వెళుతున్నారు?<br>मीरु एक्कदिकि वेलुथुन्नारु? | నేను ఆఫీసుకు వెళుతున్నాను.<br>नेनु ऑफिसुकु वेलुथुनानु |
| Tamil | நீ எங்கே செல்கிறாய்?<br>नी एन्गे सेल्गिराइ? | நான் அலுவலகம் செல்கிறேன்.<br>ननाम अलुवलगम सेल्गिरने. |
| Bengali | আপনি কোথায় যাচ্ছেন?<br>आप्नि कोथाय जाछ्छेन? | আমি অফিস যাচ্ছি।<br>अरामि ओफ्फिचे जच्छि. |
| Marathi | तुम्ही कुठे जात आहात?<br>तुम्ही कुठे जात आहात? | मी ऑफीसला जात आहे.<br>मी ऑफिसला जात आहे. |
| Kannada | ನೀವೆಲ್ಲಿಗೆ ಹೋಗುತ್ತಿದ್ದೀರಿ?<br>नीवेल्लिगे हॉगुत्तिद्दीरि? | ನಾನು ಆಫೀಸ್‌ಗೆ ಹೋಗುತ್ತಿದ್ದೇನೆ.<br>नानु ऑफीस-गे होगुत्तिद्दैने |
| Oriya | ତୁମେ କୁଆଡେ ଯାଉଛ?<br>तुमे कुआडे जाउछ्ह? | ମୁଁ ଅଫିସ୍‌କୁ ଯାଉଛି।<br>मुन अफिस्कु जाउछिह. |
| Gujarati | તમે ક્યાં જઈ રહ્યા છો?<br>तमे क्या जई राह्या छो? | હું ઓફિસ જઈ રહ્યો છું.<br>हुं ओफिस जै रह्यो छुं. |
| Assamese | তুমি ক'লৈ যোৱা ?<br>तुमि कोलोइ जुअ? | মই অফিচলৈ যাও ।<br>मोइ ओफ्फिचोलोइ जौ. |
| Malayalam | നിങ്ങൾ എവിടെ പോകുന്നു?<br>निन्गल एविदे पोकुन्नु? | ഞാൻ ഓഫീസിൽ പോകുന്നു.<br>नजन ओफ्फिचिल पोकुन्नु. |
| Santali | ᱚᱠᱟ ᱛᱮᱵᱤᱱ ᱥᱮᱱᱚᱜ ᱠᱟᱱᱟ?<br>ऑक तेबिन सेनोग कन? | ᱚᱯᱷᱤᱥ ᱤᱧ ᱥᱮᱱᱚᱜ ᱠᱟᱱᱟ।<br>ऑफिस इन सेनोग कन. |
| Hindi | तुम कहाँ जा रहे हो?<br>तुम कहा जा रहे हो? | मैं दफ़्तर जा रहा हूँ।<br>मैं दफ्तर जा राहा हू। |





| English | I've heard about you. | Happy to meet you. |
|---|---|---|
| Sanskrit | मया भवद्विषये श्रुतम् अस्ति। | मिलित्वा सन्तोष: जात:। |
| Telugu | నేను మీగురించి విన్నాను.<br>नेनु मीगुरिन्छि विन्नानु. | మిమ్మల్ని కలుసుకుంటున్నందుకు సంతోషం.<br>मिम्मल्नि कलुसुकुन्तुन्नन्दुकु सनथोशम. |
| Tamil | நான் உன்னைப்பற்றி கேள்விப்பட்டிருக்கிறேன்.<br>नान उन्नैप्पत्रि केल्विपत्तिरुक्किरएन. | உன்னை சந்திப்பதில் மகிழ்ச்சி<br>उन्नै सन्दिप्पधिल मगिल्छि. |
| Bengali | আমি আপনার কথা শুনেছি।<br>आम्मि आप्नार कथा शुनेछिह. | আপনার সাথে সাক্ষাত করে খুশী হলাম।<br>आप्नार साथेय साक्षात कोरे खुशी होलाम |
| Marathi | मी तुमच्याविषयी ऐकलंय.<br>मी तुमच्याविषयी ऐकलं आहे. | तुम्हाला भेटून आनंद झाला.<br>तुम्हाला भेटून आनंद झाला. |
| Kannada | ನಾನು ನಿಮ್ಮ ಬಗ್ಗೆ ಕೇಳಿದ್ದೆ.<br>नानु निम्मा बागी केलिद्दे। | ನಿಮ್ಮ ಭೇಟಿಯಾಗಿದ್ದು ಸಂತೋಷ.<br>निमा व्हेॅटियागिद्दु सम्तोश. |
| Oriya | ମୁଁ ତୁମ ବିଷୟରେ ଶୁଣିଥିଲି।<br>मुन तुम बिसयरे शुणिथिलि. | ତୁମକୁ ଭେଟି ଖୁସି ହେଲି।<br>तुमकु भेटि खुशि हेलि. |
| Gujarati | મેં તમારા વિશે સાંભળ્યું છે.<br>मे तमारा विशे साम्भल्यु छे. | તમને મળીને આનંદ થયો.<br>तमने मळीने आनन्द थयो. |
| Assamese | মই তোমাৰ বিষয়ে শুনিছো।<br>मोइ तुमार बिस्क्षये क्षुनिसु. | তোমাক লগ পাই সুখী।<br>तुमाक लोग पाइ क्षुखि. |
| Malayalam | ഞാൻ നിങ്ങളെക്കുറിച്ച് കേട്ടിട്ടുണ്ട്<br>नजन निक्षलेकुरिछु केतित्तुन्दु. | നിങ്ങളെ കണ്ടതിൽ സന്തോഷം.<br>निक्षले कन्दथिल सन्थोशम. |
| Santali | ᱟᱢ ᱤᱫᱤ ᱠᱚᱛᱤᱱ ᱟᱧᱡᱚᱢ ᱟᱠᱟᱫᱟ-ᱟ।<br>अम इदि कतिन अन्जोम अकदा. | ᱟᱢ ᱥᱟᱶ ᱧᱟᱯᱟᱢ ᱠᱟᱛᱮᱧ ᱠᱩᱥᱤᱜ-ᱟ।<br>अम सौन नपम कतेइन्ज कुसिग-अ. |
| Hindi | मैंने तुम्हारे बारे में सुना है।<br>मैंने तुम्हारे बारे मे सुना है। | तुमसे मिलकर खुशी हुई।<br>तुमसे मिलकर खुशी हुई। |

# दीपोत्सवादपि अधिकम्



'दीपावली' नाम प्रभुश्रीरामचन्द्रस्य अयोध्यां प्रति प्रत्यागमनस्य, 'रामराज्यावतरणस्य' स्मृतिप्रीत्यर्थम् आचरित: उत्सव: इति जना: मन्यन्ते। गुप्तवंशस्य राजा विक्रमादित्य: अस्मिन् एव दिवसे हूणान् पराजित्य ऐतिहासिकं जयं प्राप्य स्वराजधानीं उज्जैनीं प्राप्तवान्। ५३० ख्रिस्ताब्दे हूणा: भारतम् आक्रान्तवन्त:। जैनधर्ममतीयानां कृते अपि यस्मिन् दिने भगवान् महावीर: निर्वाणपदं प्राप्तवान् स: दीपावलीदिवस: एव आसीत्। पुन: अस्मिन् एव अवसरे षष्ठ: सिक्खगुरु: हरगोबिन्द: मुगलसम्राजा जहांगिरेण मोचित: अमृतसरं प्राप्तवान्। अस्य आनन्दप्रसङ्गस्य स्मरणार्थं दीपावली-उत्सवे सुवर्णमन्दिरे सर्वत्र दीपप्रज्वलनं भवति। अत: 'दीपावली' दीपोत्सवादपि अधिका वर्तते।

# वृषभ: सङ्गीतम् च

**ग्वा**लियर इत्यत्र स्थिते दुष्प्राप्ये दुर्गे अन्त:' मनोमन्दिरम्' इति राजप्रासाद: वर्तते। अयं प्रासाद:, तेन तथा रचित: आसीत् यत् स: सर्वत: सङ्गीतं श्रोतुम् अशक्नोत्। सङ्गीतकारणादेव वनकन्यया मृगनयन्या सह  तस्य परिचय: जात: प्रेमा च वर्धित:। मृगयात: प्रत्यागमनसमये प्रथमवारं मृगनयन्या सह परिचय: जात:। तदा वृषभयो: परस्परकलहकारणात् मार्ग: अवरुद्ध: आसीत्। अत: मानसिंह: यं गजम् आरुढवान् स: अग्रे सर्तुम् अशक्त:। अकस्मादेव कुतश्चित् ग्रामबाला: तत्र समागता:। वृषभकलहं दृष्ट्वा ता: अपि चकिता: परन्तु तासु एका धैर्येण अग्रे गत्वा वृषभौ वियोजितवती। सा एव मृगनयनी आसीत्। मानसिंह: तां बहुवारं स्वप्रासादं प्रति आह्वयति स्म। तत्र च तस्या: सङ्गीतेन स: अतीव प्रभावित: भवति स्म। स: तया सह विवाहं कर्तुम् ऐष्यत् परन्तु सा 'गुजरी' जातीया आसीत् अत: तद् न शक्यम् अभवत्। परन्तु स: तस्या: कृते 'गुजरी महल' इति पृथक् निवासं रचितवान्। अधुना स: निवास: उत्खननसङ्ग्रहालये रुपान्तरित: विद्यते।



प्रत्युत्पन्नमतिः



वीरबलः

# उदासीनः राजा



१. एकदा बेगमा आपन्नसत्त्वा आसीत्। परन्तु बादशाहः तस्याः आरोग्यविषये किञ्चिदपि अवधानं न ददाति स्म। अतः सा वीरबलम् आकारयत्।



२. "वीरबल, बादशाहः साम्प्रतं मम विषये औदासेन्येन व्यवहरति। किं तत्र कारणं स्यात् इति कृपया अन्विष्यतु" "अवश्यम्। बेगममहाशये!"



३. यदा अकबर-वीरबलौ एकान्ते आस्तां तदा वीरबलः मृदुतया पृष्टवान्, हुजुर! बेगमा साम्प्रतं भवतः अधिकम् अवधानम् इच्छति।



४. "अहम् एकां वन्यस्त्रीं दृष्टवान् या स्वापत्यं प्रसूय, अपत्यं कण्डोले निधाय पुनः स्वकार्यार्थं गता।"



५. वीरबलः बेगमां रहसि मिलित्वा उक्तवान्," महाशये यथा अहं वदामि तथा करोतु भवती। एवं उक्त्वा स्वस्य योजनां तस्यै श्रावितवान्।



६. बेगमा प्रासादस्य मालाकारम् आहूय आदिष्टवती, ''अद्य आरभ्य एते पुष्पवृक्षा: न सेचनीया:। कामं शुष्कतां गच्छन्तु ते। बादशाहं वदतु, एषा ममाज्ञा इति।''



७. सम्राट् पुष्पवृक्षाणां दुरवस्थां दृष्ट्वा चकित:जात:। तद्विषये सत्यं ज्ञात्वा विश्रामं कुर्वतीं बेगमां द्रष्टुं वेगेन गतवान्। '' किं भवती एव मालाकारं जलसेचनात् निरुद्धवती ?''



८. बेगमा अपि औदासीन्येन अवदत्,'अटव्यां न कोऽपि वन्यवृक्षान् जलेन सिञ्चति। अस्माभि: अपि किमर्थम् शुष्कीभवन्त: एते वृक्षा: सेचनीया: ?''



९. तदा बादशाह: अपृच्छत्,'' किम् उभावपि समानौ ?'' तदा बेगमा अवदत् ,'' वन्यस्त्री तथा प्रासादस्था बेगम अपि किं समानन्यायेन तोलनीये ?''

## कूटम्

नौकाचालकं प्रति राजुं नयतु।



# चित्रमञ्जूषा

अस्मिन् मासे लताचित्रैः चित्रपुस्तिकानिर्माणं कुर्मः


द्राक्षालता


नागवल्ली


कालिङ्गलता


कोषातकलता


बोगनवल्ली


बृहत्फला

